॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

२३८

॥ श्रीः ॥

# काव्यप्रकाश-रहस्यम्

( काव्यप्रकाश-प्रश्नोत्तरी )

रचयितारौ

साहित्यशास्त्राचार्यः

पं० सीताराम-जयराम जोशी, एम० ए०

काशीहिन्दूविश्वविद्यालयसंस्कृताध्यापकचरः

तथा

पण्डित देवदत्तशास्त्री विद्यानिधिः

अम्बालास्थ दी० कु० कि० स० ध० संस्कृतकालेजाध्यापकः



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९८७

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मुद्रक : चौखम्बा प्रेस, वाराणसी

संस्करण : दशम, वि० सं० २०४२

मूल्य : रु० ●-००






के० ३७/९९, गोपाल मन्दिर लेन

पो० बा० १००८, वाराणसी-२२१००१ ( भारत )

फोन : ६३१४५

प्रधान वितरक

कृष्णदास अकादमी

पो० बा० नं० १११८

चौक, (चित्रा सिनेमा बिल्डिंग), वाराणसी-२२१००१

( भारत )

HARIDAS SANSKRIT SERIES
238



# KĀVYAPRAKĀŚA-RAHASYAM

( Questions and Answers of Mammata's Kavyaprakasha )

By

Pt. Sita Rama Jaya Rama Joshi M. A.

And

Pt. Devadatta Shastri Vidyanidhi



CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI-221001

1987

# भूमिका

नत्वा जगद्गुरुं देवं विद्यां तां ब्रह्मणः कलाम् ।
काव्यप्रकाशगुह्यस्य प्रस्तावः क्रियते मया ॥

काव्यप्रकाशरहस्य नामाऽयमेव ग्रन्थः पूर्वरूपं परिवृत्य किञ्चिन्नूतनवेषपरिधानेनाधुना जिज्ञासूनां विद्यार्थिनां तथा चान्यविचक्षणानां पुरतो वरीवर्ति । तत्रत्याः प्रथमषडुल्लासा अतिसंक्षिप्ततया विहितत्वात् परीक्षार्थिनां छात्राणां ग्रन्थरहस्यबोधनायातीवापर्याप्ता इति मत्वा ग्रन्थप्रकाशकनिर्बन्धादेव परिसंबोधक्षमा यथाभवेयुस्तथा कृत्वा तेऽत्र विनिवेशिताः । अपरञ्चात्रैव साहित्यिकी प्रथिता काऽपि स्पृहणीयपरम्पराऽपि प्रथितुं पारितेति जिज्ञासूनां तदतीव मुदमावहेदित्याशासे । सप्तमोल्लासादारभ्य ग्रन्थसमाप्तिपर्यन्तं तु श्रीदेवदत्तशास्त्रिकृता रचना पूर्ववदेव सन्निधापिता । ग्रन्थगौरवभयात् स भागोऽत्रास्पृष्टो वर्तते । ग्रन्थविस्तरेण तन्मूल्यमपि स्वाभाविकमेव वृद्धिमाप्नुयात्तथाभूते च सति निःस्वच्छात्राणां कृते ग्रन्थप्रापणकाठिन्यं जायेतेति प्रधानभाग एवात्र परिवर्तितस्तिष्ठति । आशंसे चायं नूतनरूपेण जिज्ञासूनां मनोरञ्जने तथा ग्रन्थस्य सम्यग्बोधविधाने प्रभवेदिति ।

ग्रन्थकृत् परिचयस्तस्य चरित्र-देश-कालवर्णनेन समासेनैवात्र विहितश्चेत्सोपि तेषामुपकारक्षमो सम्पद्येतेति मत्वाऽतिसंक्षेपेणैवात्र विधीयते । ग्रन्थस्यास्य प्रणेता राजानकपदलाञ्छनः श्रीमान् मम्मटभट्टः काश्मीरानलञ्चकार स्वनिवासेनेत्यत्र न वैमत्यं विदुषाम् । भीमसेनदीक्षितनिर्मितसुधासागराख्यया ग्रन्थस्यास्य टीकयेदमपि विदितं यः 'अस्य पिता जैय्यटनामधेयः । व्याकरणमहाभाष्यप्रदीपकृत्कैय्यटस्तथा वेदभाष्यकृदुव्वटश्चास्यैव द्वौ कनीयांसौ भ्रातरावास्ताम् । स स्वभ्रातृभ्यां सह वाराणस्यामध्ययनाध्यापनमकरोदि'ति । तथा च भीमसेनः—

श्रीमान् कैयट औव्वटो ह्यवरजो यच्छात्रतामागतः ।
भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिं गतः ॥

इति स्वटीकायाः प्रस्तावश्लोकेषु कथयति । अत्र कैयटोपाध्यायो वैयाकरणः सन् स्वप्रदीपप्रस्तावे आत्मानं जैयटात्मजमभिधत्ते । उव्वटेन तु स्वीयवेदभाष्ये वज्रटात्मजमात्मानमभिव्यनक्ति । अतोऽस्य मम्मटभ्रातृत्वं विद्वद्भिर्विशङ्कितं सदनिर्णीतं वर्तते ।

सर्वशास्त्रविशारदोऽपि मम्मटाचार्योऽयं प्रधानतया वैयाकरणाग्रणीरेव बभूव, यद्दृढीकरणं काव्यप्रकाशस्थितनैकविधप्रमाणपरम्परया सुशकम् । न केवलं भीमसेनेनैव किन्तु तत्पूर्वैरपि टीकाकृद्भिरानन्ददेवनाथतर्कपञ्चाननप्रभृतिभिरयं मम्मटभट्टो वाग्देव्या अवतारत्वेन वर्णितः ।

उव्वटोक्तमन्त्रभाष्यप्रस्तावगतश्लोकेन ('भोजे पृथ्वीं प्रशासति' इत्युक्तत्वात्) मम्मटस्य भोजराजसमकालिकत्वमपि ज्ञापितं भवति । अयं धारेश्वरो भोजराजः खृष्टाब्दीय १०१८-१०५४ वर्षपर्यन्तं महीं शशासेति शिलालेखस्थितानेकप्रमाणोपन्यासद्वाराऽऽधुनिकैरैतिहासिकैर्निश्चप्रचम् । काव्यप्रकाशेऽपि मम्मटभट्टेनैवोदात्तालङ्कारोदाहरणावसरे 'यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्' इति भोजनृपतेर्वर्णनं कृत्वा तत्समकालिकत्वं प्रकटीकृतम् ।

यदि भोजनृपतेः समकालिकत्वमस्य मम्मटाचार्यस्य न स्वीक्रियेत तर्हि तस्मादर्वाचीनत्वं त्ववश्यमेवाङ्गीकरणीयम् । एवमयं काव्यप्रकाशस्य निर्माता खृष्टाब्दीयैकादशशतकस्योत्तरार्धात् (ई० १०५०) प्राचीनो न । खृष्टाब्दीयद्वादशशतकस्य पूर्वार्धे (ई० ११४०) वर्तमानराजानकरुय्यकवर्येण काव्यप्रकाशस्य टीका सङ्केतनामिका विरचितेति, साप्यधुना पुण्यपत्तने भाण्डारकरसंशोधनमहालये उपलभ्यते इति द्वादशशतकारम्भात्पूर्वमेव काव्यप्रकाशस्य प्रचारोऽभवदित्यवगन्तव्यम् । काव्यप्रकाशस्यापरा टीका संकेतनामिका गुर्जरदेशस्थ-माणिक्यचन्द्रसूरिणा विरचिताऽधुना सम्मुद्र्य प्रकाशितोपलभ्यते अतो द्वादशशतकस्यारम्भादेव काव्यप्रकाशस्य पठनपाठनप्रणाली भारतवर्षे प्रचलिताऽऽसीदित्यनुमेयम् । एवं मम्मटभट्टेनायं काव्यप्रकाशग्रन्थः खृष्टाब्दीयै-

कादशशतकस्योत्तरार्धभागे ( ई० १०५०–११०० ) कदाचिद्विनिर्मित इति जिज्ञासुभिः समभ्युपेयम् ।

अलङ्कारनये काव्यप्रकाशस्य तदेव स्थानं यद् व्याकरणे महाभाष्यस्य वेदान्ते वा शारीरकशाङ्करभाष्यस्य दृश्यते अतोऽस्य नाम आकर इति सूपपन्नम् । अस्यापि ग्रन्थस्यालङ्कारग्रन्थान्तराणामिव त्रय एवांशाः सन्ति 'कारिकावृत्तिरुदाहरणं चे'ति । तत्र द्वाचत्वारिंशद्धिकैकशतसङ्ख्याकाः कारिकाः सूत्रवद्गाढसन्दर्भा वर्तन्ते । वृत्तिरपि गद्यात्मिका मिताक्षरा सारगर्भा दुरूहा अत एव परिणाययितुं दुःशका वर्तते । ग्रन्थोऽयं मम्मटभट्टवर्येण कथमपि समाप्तिं न नीतः परिकरालङ्कारावधिरेव विरचितः । शेषस्तु तच्छिष्यभूतेन राजानकाल्लकसूरिणाल्लटाचार्येण वा समाप्ति नीत इति ग्रन्थस्यास्यान्तिमश्लोकसन्दर्भेणानन्दकविना काश्मीरकेण राजानकरुय्यकवर्येण तथा माणिक्यचन्द्रसूरिणाऽपि प्रकटीकृतम् । श्रीमदानन्दः स्वीयनिदर्शनाख्यटीकायां कथयति—'कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः । प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा' इति । इत्ययमेव सोमेश्वर-जयन्तभट्टकमलाकरसरस्वतीतीर्थप्रभृतिभिरप्युच्यते ।

ग्रन्थस्यास्यांशत्रितये तृतीयांश उदाहरणात्मको मम्मटकृतिर्न । तेन तत्समयप्रसिद्धकवीनां ग्रन्थत उद्धृतोऽस्ति शेषांशद्वयविषयेऽपि तदेककर्तृकं द्विकर्तृकम् इत्यत्र टीकाकाराणां वैमत्यं दृश्यते । प्रायेण वङ्गीयाः कारिकाकर्तृत्वं भरतमुनौ समारोपयन्ति । तदितरे न क्षमन्ते । भिन्नकर्तृकत्वस्य प्रतिवादयितारस्तु कथयन्ति 'कतिपयकारिकाः प्रकाशग्रन्थगता भरतप्रणीतनाट्यशास्त्रेऽधुनोपलभ्यन्ते ।' तथा च ग्रन्थस्यास्य प्रथमकारिकावृत्त्युपक्रमावसरे 'ग्रन्थकृत्परामृशति' इति प्रथमपुरुषपूर्वकनिर्देशः कारिकाकर्तुर्वृत्तिकृद्भिन्नत्वमुपपादयति । दशमोल्लासे च रूपकलक्षणे 'समस्तवस्तुविषयं श्रौता आरोपिता यदा' इति कारिकायां बहुवचनग्रहणं तथा चास्या वृत्तौ 'बहुवचनमविवक्षितम्' इत्युपपादनं कर्तृपृथक्त्वबोधमेवेति ।

इतरेऽत्रेत्थं समादधते—सार्द्धशतकारिकासु द्वे तिस्रो वा कारिका भरतमुनिप्रणीता नाट्यशास्त्रे सन्दृश्यन्ते। तास्तत एव बुद्धिपूर्वं मम्मटाचार्येणोद्धृता इत्यवसेयाः। कुतः, तैरेव वामनानन्दवर्धनाचार्यग्रन्थेभ्योऽपीदृश एव कतिपयश्लोका उद्धृत्य लिखिता अपरत्र सुधीभिर्द्रष्टव्याः प्रथमपुरुषनिर्देशस्तु महापुरुषाणामात्मश्लाघादोषदूरीकरणार्थमेव। समस्तवस्तुविषयरूपके तत्रारोप्यमाणानां बाहुल्याद् बहुवचनमुक्तम्। वृत्तावपि प्रथमं यद्बहुत्वमवलम्ब्यैव स्पष्टीक्रियते, यत्र तु बहुवचनमविवक्षितमित्युक्तिस्तत्रारोप्यमाणानां द्वित्वग्रहणात् द्वित्वेऽपि समस्तवस्तुविषयमरूपकस्य प्राप्तिप्रतिबोधनार्थम्। प्रत्युत कारिकावृत्त्युभयात्मकस्य मम्मटभट्टैककर्तृत्वे प्रमाणानि स्वतन्त्राण्युपलभ्यन्ते।

(क) यदि वृत्तेर्भिन्नकर्तृकत्वमपेक्ष्यते तर्हि तत्र पृथङ्मङ्गलाचरणेन भाव्यं यन्न दृश्यते।

(ख) यदि कारिकाकर्तृत्वं भरतमुनेरिष्टं तर्हि 'तदुक्तं भरतेन' इति वृत्तिकारोक्तिर्न सङ्गच्छेत।

(ग) दशमोल्लासे मालारूपककारिका त्वेवम् 'साङ्गमेतन्निरङ्गं तु शुद्धं माला तु पूर्ववत्' इत्यत्र पूर्ववत्-पदेन यन्मालारूपकं निर्दिष्टं तद्वृत्तिगतमालोपमालक्षणं द्योतयति स्वयं कारिकागतं सत् यदेकमेव प्रमाणमुभयोः कारिकावृत्त्योरेककर्तृकत्वप्रतिपादनेऽलम्, इत्थं परिकरावधि कारिकावृत्तिग्रन्थो मम्मटभट्टकर्तृक एवेति सिद्धम्।

दीपावली
वि० सं० २०१६

विद्वद्विधेयः
सीतारामजयरामजोशी

# प्रश्नोत्तर-सूची

## प्रथमोल्लासः

## द्वितीयोल्लासः

१० शब्दानां कतिधा वृत्तिः स्वीक्रियते ? अलङ्कारेतरनयेषु अस्मिन् विषये किमभिप्रेतम् ? अलङ्कारनये को विशेषः ? इत्येतत् सर्वं सोपपत्तिकं प्रतिपादयत । १७

११ सविस्तरं सोपपत्तिकं व्याख्यायताम्—'तात्पर्यार्थोऽपि केषुचित्' तथा 'वाच्य एव वाक्यार्थ' इत्यन्विताभिधानवादिनः' । १८

१२ 'साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः' इति वाचकशब्दलक्षणस्य निर्दोषता प्रतिपाद्यताम् । १९

१३ व्याख्यायतामियं पङ्क्तिस्तस्या आशयं बोधयितुम् । 'इहागृहीतसंकेतस्य शब्दस्यार्थप्रतीतेरभावात्सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः' इति । २०

१४ व्याख्यायतां 'सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा' इति । २०

१५ सोपपत्तिकं व्याख्यायतामियं करिका—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽरोपिता क्रिया ॥ २३

१६ व्याख्यायन्तामिमास्तिस्रः कारिका ग्रन्थकृदुक्तसरण्या चाक्षेपसमाधानपूर्वकं यत्र तयोरावश्यकता प्रतीयेत । २४

(१) स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥
(२) सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।
विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥
(३) भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा ॥

१७ 'गौरनुबन्ध्यः' इत्यादिकं जातिशक्तिवादिनो मीमांसका उपादानलक्षणामुदाहरन्ति । काव्यप्रकाशे तन्निरासः । कुतः तथा च 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्रापि तैरुपादानलक्षणैव स्वीकृता । तदेतदुभयं प्रकाशकारोक्तरीत्यासोपपत्तिकं निराकरणीयम् । २८

१८ 'अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु 'गङ्गातटे घोष' इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः'। इतीयं पङ्क्तिः प्रकाशग्रन्थाशयं विशदीकुर्वता भवता समीचीनतया व्याख्येया। २९

१९ विशदं व्याख्यायन्तां निम्नोल्लिखितपङ्क्तयः। 'अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्ति इति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यते इत्यपरे' इति। ३०

२० 'तत्र व्यापारो व्यञ्जनात्मकः' इति कारिकांशेन लक्षणा, मूलव्यञ्जनाव्यापारं प्रस्तुत्य ग्रन्थकृता प्रयुक्तं 'विशेषाः स्युस्तु लक्षिते' तत्रादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यां व्यापारान्तरेण गम्याः। तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम्। इत्येतद् ग्रन्थकृत्प्रतिपादनं तदुक्तसरण्यैव शङ्कासमाधानपूर्वकं सम्यग्विविच्यताम्। ३१

२१ व्याख्यायतामियं कारिका—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया॥ ३२

२२ 'हेत्वभावान्न लक्षणा' इत्यस्य क आशयः। ३३

२३ समुपपाद्यताम् 'एवमप्यनवस्था स्याद् या मूलक्षयकारिणी' इति कारिकांशः। ३४

२४ 'प्रयोजनेन सहितं लक्षणीयं न युज्यते' इत्यस्य कोऽर्थः। ३४

२५ व्याख्यायतां सूत्रमिदं 'ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्' इति। ३४

२६ अभिधामूलव्यञ्जना ग्रन्थकारोक्तदिशा प्रतिपाद्यताम्। ३५

## तृतीयोल्लासः

२७ अर्थव्यञ्जकताप्रतिपादनाय व्याख्यायतां निम्नोल्लिखितसूत्रवचनम्।

वक्तृबोद्धव्य-काकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥ इति । ३९

२८ अत्र तृतीयोल्लासे 'तथाभूतां दृष्ट्वा०' इत्युदाहरणे वृतावुक्तम्—
'अत्र मयि न योग्यः खेदः कुरुषु तु योग्यः इति कन्त्रा प्रकाश्यते'
इति । तत्र क आशयो ग्रन्थकृतः ससमीचीनतया प्रतिपाद्यताम् । ४३

## चतुर्थोल्लासः

२९ लक्षणामूलव्यङ्ग्यध्वनेरभिधामूलव्यङ्ग्यध्वनेश्च स्वरूपं सोपपत्तिकं निरूप्य तयोर्भेदानपि सोदाहरण प्रतिपादयत । ४५

३० रसलक्षणनिरूपणाय व्याख्यायेतामिमे कारिके—

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः । ४६

३१ काव्यप्रकाशोक्तरसवादप्रपञ्चस्तेनैवोक्तदिशा व्याख्याय तेषां हेयोपादेयते अपि सविस्तरं प्रतिपादयत । ४७

३२ काव्यप्रकाशकृदुक्तरसप्रपञ्चनिष्कर्षतो रसस्वरूपं कथं निर्धारितं भवतीति सामान्यरूपेण सविस्तरं प्रतिपादयत । ५१

३३ व्याख्यायतां निम्नोद्धृतपदपङ्क्तिः सोदाहरणं स्पष्टीकृत्य 'यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिस्तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तित्वम् ।' ५४

३४ शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाःस्मृताः' इति कारिकोक्तरीत्या प्रतिरसस्थायिभावस्य विभावादीनाञ्च स्पष्टतया निर्देशः कार्यः । 'शान्तोऽपि नवमो रसः' इत्यस्याप्यत्र समावेशः कार्यः । ५५

३५ पूर्वोक्तनवरसानां लक्षणोदाहरणानि विलिख्योदाहरणेषु तेषु विभावादीनां स्थायिभावपूर्वकं सुविशदनिर्देशः कार्यः । ५६

३६ व्यभिचारिभावान् नामतो विलिख्य तेषां लक्षणान्यपि प्रदर्शयत । ६०

३७ अथ 'भावस्य' किं लक्षणम् । सोदाहरणं सप्रपञ्चः स प्रतिपाद्यताम् । ६३

## षष्ठोल्लासः

## सप्तमोल्लासः



## अष्टमोल्लासः



## नवमोल्लासः

## अथ सङ्कीर्णाः केचित् प्रश्नाः





॥ श्रीः ॥

# काव्यप्रकाश-रहस्यम्

## (काव्यप्रकाश-प्रश्नोत्तरी)



श्रीरामप्रणिहितधीर्विहितगुरुप्रणतिराप्ततत्प्रणुतिः ।
श्रेयस्कामो युञ्जे प्रकाशरहस्यावबोधाय ॥
यस्याः कटाक्षमात्रेण शेमुषी सम्प्रसीदति ।
तां चिच्छक्तिमयीं देवीं शारदां समुपास्महे ॥

### अथ प्रथमोल्लासः

प्रश्नः १—काव्यप्रकाशस्थमङ्गलश्लोकस्य व्याख्याप्रसङ्गेन तन्महत्त्वं प्रतिपाद्य तत्स्थपदानां विग्रहव्याकृतिपुरःसरं समालोचना कार्या ।

उ० १—'ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति' इति प्रास्ताविकी वृत्तिः । तदनन्तरं—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥

इति मङ्गलश्लोकः । एकप्रयोजनोद्देश्यप्रवृत्तावनेकपदसमुदायो ग्रन्थः, तदारम्भे च विघ्नविघाताय समाप्तये वा स्वेष्टदेवतामङ्गलस्यावश्यकतया प्रकृतग्रन्थस्य काव्यपरतया कविनिर्मितभारतीत्यध्यवसितां तदधिष्ठात्रीं भगवतीं वाग्देवीं विधातृसृष्टितो व्यतिरेकेणोपश्लोकयति । तत्र सृष्टिस्तावत् नियतया दैवेन कृता ये नियमास्तैः सहिता भवति, कवेर्वाङ्निर्मितिस्तु तद्विलक्षणा । नियतिश्च पदार्थानामसाधारणो धर्मः, अदृष्टं वा 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरोक्तप्रकारेण दैवम् अदृष्टपदबोध्या वा नियतिः । चन्द्रस्य नियतिकृतनियमस्तु तदाह्लादकत्वं शीतरश्मित्वं च । कविस्तु तदवमान्य विरहोत्पीडितानां

कृते चन्द्रस्य दाहकत्वमुष्णरश्मित्वं च वर्णयति। अतः कविनिर्मितो नियतिकृत-नियमो नास्ति तेषामप्रतिहतगतित्वात्।

तथा च ब्रह्मणः सृष्टौ त्रिगुणात्मिका प्रकृतिः सत्त्वरजस्तमोमयी अत एव सुखदुःखमोहस्वभावा सांख्यनये सुप्रसिद्धा सर्वेषां चानुभवसिद्धा 'सत्त्वप्रकृतेः सुखजननम्, रजसो दुःखम्, तमसो मोह' इति सांख्यैः प्रतिपाद्यते। काव्ये तु करुणभयानकयो रसयोरपि दुःखमोहौ न भवतः किन्तु सर्वदाऽऽह्लादमात्रमेव-कत्वमिति चेत्? सुरते दन्तनखक्षतादिभ्य इव। अतः कतिसृष्टिः सदैव ह्लादैक-मयी। आह्लादमात्रस्वभावाऽनुमता। दुःखमोहयोरभावात् ब्रह्मणः सृष्टेरुत्कृष्ट-तराऽभीष्टतमा च।

घटस्य निर्माणे कार्ये तत्कर्तुः कुलालस्य स्वातन्त्र्यं न दृश्यते। तत्र कर्त्ता कारणपरतन्त्रोऽस्ति। तत्र घटस्योपादानकारणं मृत्तिकैव। सहकारिकारणा-नामपि घटनिर्माणेऽतीवावश्यकताऽस्ति। यथा दण्डचक्रचीवरादीनामभावे कुलालो घटं निर्मातुं न प्रभवेत्। इत्थं तत्र कर्त्ता स्याद् अन्यानि यानि कारणानि तेषां परतन्त्रो भवति। कविनिर्मितौ च कविप्रतिभायाः परं न किञ्चिदपि तत्रोपेक्ष्यते। अतः कवेः सृष्टिरनन्यपरतन्त्रा मता। 'परतन्त्र' शब्दोऽत्राधीन-पर्याय एवेति समालोचनायामग्रे स्पष्टीक्रियते।

ततश्च ब्रह्मणः सृष्टौ षड्रसा एव सुविश्रुताः। अत्र काव्ये रसानामाधिक्यं नव इति। ते शृंगाराद्या नव। अथवा प्रतिकाव्यं नवीना वा। लोके ये षड्रसाः सन्ति ते सर्वे एव प्राणिमात्राणां हृद्या न प्रतीयन्ते। यथा कट्वादीनां हेयतया-ऽनभिरुचेः। अतः सा सृष्टिः षड्रसरुचिरा इति वक्तुं न शक्या। काव्ये तु सर्वे रसाः सदैव हृद्या एव। अतो रुचिरा मनस आह्लादमात्रजनकाः। अत एव कथिता नवरसरुचिरेति। एतादृशीं विलक्षणस्वरूपां कविनिर्मितिमादधती कवेर्भारती जयति, सर्वोत्कर्षेण वर्तते। स्वावधिकोत्कर्षप्रकारकज्ञानजनकीभूतो व्यापारो नमः पदार्थः। भगवत्याः सर्वोत्कृष्टतया वर्णनात् सवन्तिःपातनः कवेर्नमस्कार आक्षिप्यते इति तां प्रत्यस्मि प्रणत इति।

अत्रेदमपि विशेषेण बोद्धव्यम्। 'नियति०' इत्यादिविशेषणैः मीमांसान्याय-साङ्ख्य-वैशेषिक वेदान्ताभिमतप्रपञ्चसृष्टयपेक्षया कविसृष्टेर्वैचित्र्यं प्रतिपाद्यते। तथा हि नियतिर्दैवम्। तच्च स्वकृतसुकृतदुष्कृतकर्मरूपम्। तैश्च कर्मकरात्मनि भोगानुकूला शक्तिः साध्यते। तदनुसारिणी च गतिरिति सा नियतिर्नियतेति

मीमांसकसृष्टिः। कविसृष्टेस्तु न जन्मान्तरकर्माधीनता। तस्य तत्कालप्रतिभामात्रजन्यत्वात्। सुखदुःखमोहस्वभावात् साङ्ख्यमते प्रकृतिधर्माणां सत्त्वरजस्तमसां परिणामेन सर्वस्यापि सुखदुःखमोहात्मता। इयन्तु ह्लादैकमयी। बीभत्सादिभ्यः सर्वेभ्योऽपि सुखस्यैवोत्पत्तयः। परमाण्वादीनि नैयायिकाभिमतसृष्टेर्वैलक्षण्यं प्रागेव प्रतिपादितम्। षड्रसेत्यनेन वैशेषिकमतसृष्ट्यधिकत्वं प्रदर्शितम्। न्यायसूत्रेषु प्रमाणप्रमेयादिविचारो, न पदार्थविभागः। स वैशेषिक एव दृश्यते। वेदान्तसृष्ट्यपेक्षया वैचित्र्यमाह—न च हृद्यैव तैरिति। वेदान्तनये ब्रह्मणः सुखस्वरूपता। कथमिति चेत् इच्छान्तरानधीनेच्छाविषयत्वं तावत्सुखत्वम्। इतरासां जलेच्छादीनां तृप्तीच्छाद्यधीनत्वम्। तृप्तीच्छायाश्च सुखेच्छाधीनत्वम्। सुखेच्छा त्वात्माधीना। तस्य त्विच्छान्तराधीनत्वं नास्ति इति तत्रैव सुखस्य विश्रामात्। तस्य सुखस्वरूपता जगतश्च ब्रह्मण एव परिणामत्वात् सर्वस्यापि ब्रह्माभिन्नतया सुखत्वेऽपि तस्यैव ब्रह्मणो वृश्चिकादिपरिणामेन न सुखरूपता। अपि त्वात्मत्वेन रूपेणेत्युक्तं न च हृद्यैवेति।

अत्र श्लोकेऽस्मिन् त्रीण्येव पदानि विग्रहव्याकृतिपूर्वकं विशेषेण समालोचनार्हाणि। तानि त्रीणि—१ ह्लादैकमयीम्। २ अनन्यपरतन्त्राम्। ३ नवरसरुचिराम्, इति। त्रीण्यपीमानि पदानि 'निर्मितिम्' पदस्य विशेषणानि। निर्मितिम् पदन्तु 'आदधती'ति क्रियापदस्य कर्म भवति। अतः सर्वाणि द्वितीयान्तानि :

१. ह्लादैकमयीम्—अत्र विग्रहः ह्लादेन एकमयी ह्लादैकमयी ताम्, सुप्सुपेति समासः। अभेदवचने तृतीया 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकात्। यथा 'धान्येन धनमयो ग्रामः' इतिवत्। तत्र 'एकमयी' तिपदं संख्यावाचकैकशब्दात् 'तत्प्रकृतवचने मयट्' इति सूत्रेण प्रकृतार्थे तद्धित 'मयट्' प्रत्ययः। प्रकृतमित्यस्य प्राचुर्येण प्रस्तुतमित्यर्थो बोद्धव्यः। एकमेव वस्तु प्रकृतं प्राचुर्येण प्रस्तुतं यस्यां सा एकमयी। केचिद् एकपदं संख्यावाचि न गृहीत्वा मात्रपर्यायं गृह्णन्ति। तदा 'ह्लादैकमयी' इत्यस्य ह्लादमात्रस्वभावा इत्यर्थो भवति। अनेन दुःखमोहौ निराकृतौ भवतः।

२. अनन्यपरतन्त्राम्—अन्यस्य कविभारतीभिन्नस्य (समवाय्यसमवायिनिमित्तरूपकारणस्य) परतंत्रा अधीना न भवति ताम् अनन्यपरतन्त्राम्। तत्रेत्थं विचारणा भवति यत् अन्यपरशब्दयोः पुनरुक्तिदोषः सम्भवति वा न वेति।

तत्र बीजं किल 'परतन्त्र' शब्दस्य कोऽर्थः पराधीनाधीनपदयोर्भिन्नपर्यायो वा। तत्रामरस्तु-'परतन्त्रः पराधीनः परवान्नाथवानपि। अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ' इति वक्ति, तत्र केचित् चत्वारि पूर्वपदानि पराधीनवाचकानि। तथा च पश्चानन्तरोदाहृतपदानि अधीनवाचकानीति प्रतिष्ठन्ते। तेषां मते 'अन्यपर' शब्दयोरभिन्नत्वेन पौनरुक्त्यापत्तिः। तत्परिहाराय कवेः प्रतिभायाश्चान्यो य आत्मनः ( भारत्याः ) परः तदायत्तत्वरहिताम्, इति वदन्ति। यद्वृत्तिविरुद्धं तथा क्लिष्टमपि प्रतीयते। अमरोक्तनवानामपि पदानामेकपर्यायत्वे स्वीकृते प्रश्नोऽयं न सम्भवत्येव। अन्यैश्च तथा स्वीकृतमस्तीति तद्वृत्त्यनुसारितयाऽतीव समीचीनमिति प्रतिभाति।

३. नवरसरुचिराम्—नव नवसंख्याका रसाः शृङ्गारादयो यस्यां सा अथवा नवाः प्रतिकाव्यं नवीना रसा यस्यामिति वा 'नवरसा सा चासौ रुचिरा मनोहरा च ताम्'—एवं बहुव्रीहिगर्भः कर्मधारयः। 'शीतोष्णं जलम्' इत्यादिवत् विशेषणयोरपि मिथो गुणप्रधानभावविवक्षया 'विशेषणं विशेष्येण बहुलम्' इति कर्मधारयः समासः। नवानां रसानां समाहारः इति समाहारस्तु न। 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति 'त्रिलोकी' 'पञ्चमूली' इतिवत् 'नवरसा' इत्यापत्तिः। अथवा नवरसेन रुचिरा इति तृतीयातत्पुरुषः। नवरसेत्यत्र नव नव अवयवा यस्य सः नवावयवः स चासौ रसश्चेति नवरसः इति शाकपार्थिवादित्वाद् मध्यमपदलोपी कर्मधारयः। अथवा नवाः प्रतिकाव्यं नवीना रसाः, अत्र नवाश्च ते रसाश्चेति कर्मधारये 'नवरसाः' इति बहुवचनान्तसमासः। तदनन्तरं तृतीयातत्पुरुषे कृते नवरसैः रुचिरा नवरसरुचिरेति समासः, ताम् नवरसरुचिराम्। वृत्तौ च 'न च हृद्यैव तैः' इति। हृद्या इति बहुव्रीहिगर्भकर्मधारयस्य तथा तैरिति तृतीयातत्पुरुषस्य सङ्केतितत्वात्।

नन्वेतादृशे गुरुकर्मणि प्रेक्षावतामिष्टदेवताप्रणतिरवश्यं दृश्यते युक्तिमपि च। तदनेन स्तुतिमात्रमाचरता यन्न कृता, तदवलेपनादज्ञानाद्वा, उभयथाऽप्यनवधेयवचनता प्रसक्ता। अथ कृतैव, तर्कि स्तुतिवन्नोपनिबद्धा, विशेषाभावात्सैव वा किन्नोपनिबद्धेति चेद् उच्यते। न खलु नतिमात्रोपनिबन्धे स्तुतिर्निबद्धा भवति स्तुतिनिबन्धे तु अर्थोन्नतिरपि निबद्धैव। यतो जयत्यर्थेन वस्तुविषयस्य वैशिष्ट्यान्नमस्कार आक्षिप्यते। तेन 'तां प्रत्यस्मि प्रणत' इति लभ्यते। यत्तूत्तमकाव्य-

स्वसिद्धये व्यङ्ग्यं दर्शयति—जयत्यर्थेन चेत्यादि इति वृत्त्यवतारणम् तदयुक्तम् । प्रणामरूपव्यङ्ग्यस्यानतिशयत्वेन ध्वनित्वाप्रयोजकत्वात्, तदर्थं चातिशयिनो व्यतिरेकालङ्कारस्यैवोपन्यासौचित्यात् । इति ।

प्र० २—काव्यस्य किं प्रयोजनम् ?

उ० २—इहेतिग्रन्थेऽभिधेयं सप्रयोजनम् इत्यादि । अभिधेयमुद्दिश्य सप्रयोजनत्वं विधीयते इत्यर्थः । अभिधेयं प्रतिपाद्यो विषयः काव्यलक्षणादिरूपः सप्रयोजनं सफलम् । अन्यथा निष्फले कर्मणि प्रवृत्तिर्न स्यात् । ततश्चैतद्ग्रन्थस्य काव्याङ्गतया काव्यसाफल्यद्वारैव साफल्यमिति काव्यस्य तावत् साफल्यं दर्शयति काव्यमिति—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।। इति ।।

अत्र 'कृत्' 'विद्' 'युज्' शब्दा भावे क्विबन्ताः । काव्यं लोकोत्तरवर्णनानिपुणस्य कवेः कर्म लोकोत्तरवर्णनमित्यर्थः । इतरफलापेक्षया प्राधान्यात् यशसः प्रथममुद्देशः । अर्थकृते द्वितीयपुरुषार्थलाभाय । सम्पदादित्वाद्भावे क्विप् । व्यवहारविदाचारज्ञानम् । राजसदसि कथं वर्तितव्यमित्यादि । शिवादितरदमङ्गलम् । अमङ्गलमरणादिशब्दानामनुच्चार्यत्वात् 'स कथाशेषतां यातः समालिङ्ग्य मरुत्सखमि'तिवत् । श्रीमन्नारायणादिस्तुत्यपूर्वद्वाराऽमङ्गलपरिहारो मयूरकवेरिव सूर्यशतकेन । स हि कुष्ठरोगपरिपीडितः पद्यशतकेन सूर्यं स्तुत्वा दिव्यं वपुराप्तवानिति लोके प्रसिद्धिः । सहृदयस्य तु काव्यश्रवणानन्तरमेव सकलप्रयोजनेषूत्तमं स्थायिभावास्वादनसमुद्भूतं वेदान्तरसम्पर्कशून्यं रसास्वादरूपमानन्दं सद्यःपरनिर्वृत्तिं निर्मिमीते । उपदेशयुजे इति राजादिगतपृथिवीपालनादिसमुचिताचारपरिज्ञानं रामादिवद्वर्तनमिष्टसाधनं न तु रावणादिवदित्युपदेशं च सत्कृत्येषु प्रवृत्त्युपदेशाय दुष्कृत्येषु निवृत्त्युपदेशाय भवति च । काव्यास्वादनकाले कवेरपि सहृदयान्तःपातितया रसास्वादः ।

ननु नीतिशास्त्रादेरपि उपदेशपरतया तत्रैव प्रवृत्तिः स्याद् । किमिति काव्ये इत्यत आह—'कान्तासम्मिततयेति' । तथा हि शब्दस्तावत् त्रिविधः प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्च । तत्राद्यो यथा शब्दप्रधानो वेदः स हि प्रभुरिव

'त्वमित्थं कुरु' इति नः समाज्ञापयति । ततश्च नियुक्तानां सन्ध्यावन्दनादौ प्रवृत्तिर्भवति । सुहृत्सम्मितो यथा पुराणेतिहासादिः । स तु सुहृदिव 'एवं कृते इष्टं, एवं कृते चानिष्टम्' इति सदसन्मार्गमात्रं प्रदर्शयति । न त्वादिशति । तृतीयस्तु ताभ्यां विलक्षणः काव्यलक्षणः । स हि कान्तेव सरसकोमलैर्वचोभिः स्वाभिमुखीकृत्योपदेशं ग्राहयति । ततश्च सुकुमारमतीनां नीरसशास्त्रेष्वशक्यप्रवेशानां राजकुमाराणां सौकर्येण कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशायास्योपयोगः । कटुकौषधादिव बालानां शर्करायामिवात्रापि इतरापेक्षया सादरा प्रवृत्तिः स्यादिति सर्वथैव काव्यस्य सफलत्वम् । यदाहुः 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति प्रीतिं कीर्तिञ्च साधुकाव्यनिषेवणमि'ति ।

काव्याद्यशः प्रभृति लभ्यत इति एतद् दृष्टान्तेन दर्शयति—कालिदासादीनामिति । श्रीहर्षादेरपादानात् । धावक इति कविः हि रत्नावलीनाम्नीं नाटिकां श्रीहर्षनाम्ना प्रणीय बहुधनमवाप्तवानिति लोकवादः । समनन्तरमेवेति सद्यः । पदस्यार्थः, काव्यश्रवणाव्यवहितोत्तरक्षणे इत्यर्थः । विगलितमपक्रान्तमन्यद्वेद्यं घटादि यस्मिन् आनन्दं चर्वणादिपर्यायम् । प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्य इत्येतस्य, सुहृत्सम्मितार्थतात्पर्यवत्पुराणेतिहासेभ्यश्चेत्यस्य च विलक्षणमित्यत्रान्वयः । वैलक्षण्ये हेतुमाह—शब्दार्थयोरिति । रसस्य शृङ्गारादेरङ्गभूतो व्यापारो व्यञ्जनादिशब्दार्थयोस्तन्निष्पाद्यरसाभिव्यञ्जकमात्रतयाऽप्रधानत्वाद् गुणभावेन रसस्यैव प्राधान्यमित्यर्थः । अत एव शब्दार्थप्रधानवेदपुराणादिभ्योऽस्य वैलक्षण्यम् । यथायोगमिति—कवेरपि सहृदयान्तर्गतत्वेन रसास्वाद इति भावः । रसस्य तदेकवेद्यत्वात् ।

शब्दप्रधानेति । अस्य द्वेधा व्याख्यानम् । तथा हि वेदस्याऽपौरुषेयत्वात्तद्गताः शब्दा एव प्रयोजका इति शाब्दी भावना प्रवर्तिकेति वेदस्य शब्दप्रधानत्वम् । यद्वा वेदगतानुपूर्वीपाठेनैवापूर्वमुत्पाद्यते न तु पर्यायशब्दैः यथा 'अग्निमील' इत्यत्र न 'वह्निमील' इति । अतस्तस्य शब्दप्रधानत्वम् । अत्रेदं बोध्यम् । शब्दप्रधानवेदस्य नियतं प्रवर्तकत्वेऽपि नरकादिभयात्सन्ध्यावन्दनादौ प्रवृत्तिः न पुनरुत्साहात् । गुर्वाज्ञाजन्यप्रवृत्तिवत् । पुराणेतिहासानाञ्च सुहृत्सम्मितार्थतात्पर्यवत्त्वेन प्रवर्तकत्वेऽपि न तेभ्यो नियमेन प्रवृत्तिः, काव्ये तु नियमेन प्रवृत्तिरुत्साहपूर्विका चेति विशेषः । न तु केषाञ्चित् काव्येऽपि प्रवृत्तिर्न दृश्यते तत्कथमिति चेन्न

रसास्वादे वासनायाः कारणत्वात्तदुक्तम् 'निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः' इति ।

प्र० ३—'सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादसमुद्भूतं विगलितवेद्यान्तरमानन्दम्' इति वृत्तिः कारिकागतस्य कस्य सम्भवति इति व्याख्यायतां समीचीनतया सर्वमिदम् ।

उ० ३—कारिकायां 'काव्यं यशसे०' इति प्रयोजननिवेदनावसरे 'सद्यःपरनिर्वृतये' इत्यपि प्रयोजनमन्यतरदुक्तम् । तस्य वृत्तिग्रन्थे यद्व्याख्यानं तद्रूपोऽयं प्रश्नः ।

अत्र सद्यःशब्देन 'समन्तरमेव काव्यश्रवणाव्यवहितोत्तरक्षण एव' इति परशब्देन 'विगलितवेद्यान्तरम्' इति निष्पन्नम् । 'सकलप्रयोजनमौलिभूतम्' इत्यपि 'पर'शब्दादेव निष्पद्यते । 'निर्वृति'पदस्यानन्दपर्यायः सर्वविश्रुतः । स च रसास्वादनसमुद्भूतः । सकलेषु यशःप्रभृतिषु प्रयोजनेषु फलेषु मौलिभूतं शेखरायमाणमिति सकलप्रयोजनमौलिभूतम् । सद्यः समन्तरमेव काव्यश्रवणसमनन्तरमेव विलम्बासहत्वात् काव्यश्रवणव्यवहितोत्तरकाल एव रसास्वादनसमुद्भूतम् रस्यते आस्वाद्यते प्रकाश्यतेऽनेनेति रसो रत्यादिस्थायिभावः । तस्यास्वादनं नाम विभावव्यभिचारिभिः संयोजनं तेन समुद्भूतं निष्पन्नमित्यर्थः । अथवा रस्यते इति रसः पानकरसन्यायेन चर्व्यमाणः । आस्वादनमास्वादः सुखस्वरूपम्, समुद्भूतः स्वप्रकाशो ज्ञानरूपोऽनुभूयमानरूपो वा । अत्र रसास्वादनसमुद्भूतमित्यत्र त्रयाणां पदानां कर्मधारयः । रसश्च तदास्वादनञ्च तत्समुद्भूतञ्चेति । विगलितवेद्यान्तरं विगलितमस्तमितं वेद्यान्तरं स्वातिरिक्तविषयान्तरं यत्रेति । अन्यद् वेद्यं वेद्यान्तरम् । स्वस्यात्मनो ज्ञानरूपविषयादन्यत् घटपटादि तज्ज्ञानविषयो यत्र नास्त्येव तथा । पदार्थज्ञाने घटो विषयः ज्ञानं विषयि । अत्र ज्ञानरूप आनन्द एव विषयो विषयी चेति उभौ तदात्मकावेव । अत एवोच्यते 'स्वविषयातिरिक्तवेद्यान्तरसम्पर्कशून्यम्' इति । अतः सर्वेयं पंक्तिः समासेनैवेत्थं व्याख्यायते । सत्स्वप्येतादृशेषु फलेषु सकलफलमूर्धाभिषिक्तः काव्यश्रवणाव्यवहितोत्तरक्षण एव विभावानुभावव्यभिचारिपरिपोषितः साधारणीकरणात्मकेनालौकिकव्यापारेण स्वत्वपरत्वादीनां प्रभावेण स्वेतरसकलानुभवशून्यो ब्रह्मास्वाद इव रसास्वादो भवति । स एव रसास्वादः परा॰

प्रधानतया निर्वृतिरानन्दः प्रधानकाव्यफलम् । यदाह साहित्यदर्पणकारो रस-स्वरूपवर्णने—'अस्य स्वरूपकथनगर्भं आस्वादनप्रकारः कथ्यते' इत्युपक्रम्याह—

सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥
लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥ इति ॥

**प्र० ४—काव्यस्य कारणमभिधाय शक्त्यादीनां कारणत्वं तृणारणिमणिन्यायेन दण्डचक्रचीवरन्यायेन वेति प्रतिपादयत ।**

उ० ४—काव्यस्य प्रयोजनं प्रतिपाद्य कारणमाह—'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् । काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ।' इति कारिका । शक्नोति पुमान् काव्यनिर्माणायास्वादानुभवायानयेति शक्तिः कवित्वबीजभूता प्रतिभाऽपरपर्याया संस्काररूपा । तदुक्तम्—'प्रतिभा कारणं तत्र व्युत्पत्तिस्तु विभूषणम् । भृशोत्पत्तिकृदभ्यास इत्येते काव्यहेतवः ।' इति सा च प्रतिभा पूर्वसुकृतपरिपाके देवतागुरुप्रसादाल्लभ्या सुदुर्लभा च । तदुक्तम्—'नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा । कवित्वं दुर्लभं तत्र शक्तिस्तत्र सदुर्लभा' इति । नन्वेतस्याः शक्तेः काव्यनिर्माणहेतुत्वे किं प्रमाणम् ? इति चेन्न । निपुणतादिसमवधानेऽपि शक्त्यभावात् कथञ्चिदाकृष्टैः पदैर्निर्मितानां पद्यानामुपहसनीयत्वात् । न हि 'शुष्को वृक्षस्तिष्ठत्यग्रे तदुपरि तिष्ठत्येकः काकः' इति वृत्तपूर्तिनिर्माणेन काव्यत्वम् । चमत्कारलेशस्यापि तत्राभावात् । अत्र प्रकारान्तरेण 'अस्त्यरण्यं तरण्यंशुसरण्यन्तर्धिकारणम् । झरीदत्तदरीरम्भदरीसुप्तसरीसृपम् ।' इति वनवर्णने च चमत्कारो भवति । तत्र शक्तिरेव बीजम् । न च कारणान्तरमिति वाच्यम् । तत्रैव कल्पितकारणे शक्तित्वव्यवहारात् । यां विनेति—ननु कवित्वबीजभूतायाः शक्तेरभावे सति काव्यस्यैकान्तमसम्भवात् । किमुक्तं प्रसृतं वेति चेदत्र ब्रूमः । शक्तिर्द्विविधा । उत्पादिका व्युत्पादिका च । तत्राद्या रसाद्यनुगुणशब्दार्थादियोजनहेतुः । व्युत्पादिका तु तद्गतरसभावगुणालङ्कारादिव्युत्पादनहेतुर्निपुणतापरपर्याया ! तत्राद्यया काव्ये प्रसृतेऽपि द्वितीयशक्तिविरहेण रसादीनां व्युत्पादनाभावादुपहसनीयत्वमिति तदभिप्रायः निपुणता विस्तृतिचातुर्यं द्वितीयं काव्यकारणम् ! तत्र हेतुमाह—लोकेति ।

तत्र स्थावरजङ्गमात्मको लोकः। तस्य चोपचारात् लोकवृत्ते पर्यवसानम्। लोकव्यवहारानभिज्ञस्य वर्णनाविस्तारचातुर्यस्यासम्भवात्। शास्त्रं व्याकरणादि। अशास्त्रज्ञनिर्मितकाव्यस्य च्युतिसंस्कृतत्वं छन्दोभङ्गादिदोषग्रस्ततयोपहसनीयतेव। काव्यं महाकविसम्बन्धि रघुवंशादि। काव्यस्य निर्माणे विस्तृतौ च पौनःपुन्येन प्रवृत्तिरभ्यासः काव्यस्य तृतीयं कारणम्। तत्र हेतुमाह—काव्यज्ञेति। काव्यज्ञाः काव्यनिर्मातारः काव्यवेत्तारश्च। तेषां शिक्षया रहस्योपदेशेन। अकाव्यज्ञानां शिक्षया कविसमयादिकं न ज्ञायेत्। 'इति' शब्दः सकलोपस्थापनाय। तस्य काव्योद्भवे निर्माणे विस्तारे च हेतुः। काव्यत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं त्रित्वमिति भावः। एतदेव वृत्तावाह 'हेतुर्न तु हेतवः' इति। प्रत्येकपर्याप्तत्वे हेतवः इति स्यात्। 'न तु हेतवः' इत्यनेन न स्वरूपयोग्यताया निषेधः। किन्तु फलोपधायकतायाः। तृणारणिमणिस्थले तृणघटितफूत्कारादिसामग्रीसमवधाने दाहवत् अत्र शक्त्याद्यन्यतमघटितलेखन्यादिसामग्रीसत्त्वे लोकोत्तरवर्णनात्मकं काव्यं न जायते। कारणत्वं कार्याव्यवहितप्राक्क्षणवृत्त्यत्यन्ताभावप्रतियोगित्वं व्यापकत्वस्वरूपम्। यत्र यत्र कारणं तत्र तत्र सर्वत्र कार्यमिति न नियमः। कपालादीनां सत्त्वेऽपि घटाद्यभावदर्शनात्। सामग्रीत्वे तु व्याप्यत्वरूपम्। सामग्रीसत्त्वेऽवश्यं तत्सत्त्वात्। ततश्च शक्त्यादिषु प्रत्येकं स्वरूपयोग्यतारूपकारणत्वे सत्यपि न तत्र सामग्रीत्वं दण्डचक्रचीवरादीनामिव। अपि तु सत्समुदायवृत्तिः। ततश्च काव्यत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वमेकत्वविशिष्टं समुदायत्वम्। तद्वदन्तःशक्तिनिपुणताभ्यासाः, इति बोधः।

प्र० ५—कारिकायाम् 'इति हेतुस्तदुद्भवे' इति यदुदितं तथा च वृत्तौ 'त्रयः समुदिता न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः' इति यदुक्तं तस्याशयं विशदं प्रतिपादयत।

उ० ५—'इति हेतुस्तदुद्भवे' इति। इति शब्दः पूर्वोक्तपरामर्शकः। शक्तिनिपुणताभ्यासा इत्यर्थः। तस्य कार्यस्य उद्भवे निर्माणे हेतुः। अत्र हेतुशब्दोत्तरैकवचनार्थः। एकत्वं तस्य कुत्रान्वय इत्याशङ्कायां प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। हेतुपदार्थे हेतुविशिष्टव्यक्तौ हेतुत्वे वा अन्वयो वाच्यः परं पदार्थेनान्वयेति न तु पदार्थैकदेशेनेत्येव व्युत्पत्तिस्तस्यार्थः। पदार्थान्तरनिष्ठ-

प्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितिर्हेतुरिति उक्तव्युत्पत्तिबलादेव घटत्वजातौ नित्यत्वान्वयाभिप्रायेण 'नित्यो घटः' इति न प्रयोगः, तत्र घटत्वस्य प्रकारतासमानाधिकरणत्वेन मुख्यविशेष्यतासम्बन्धेनोपस्थितेरभावात् । प्रकृते च पदार्थस्यैकत्वस्य हेतुत्वेऽन्वयस्वीकारे तस्य प्रकारतासमानाधिकरणत्वेन व्युत्पत्तिविरोधो भवेदिति हेतुविशिष्टे शक्त्यादावेकत्वान्वयो वाच्यः । स च बाधितः । अतः अस्यां व्युत्पत्तौ सति प्रयोजने संख्यातिरिक्तेति विशेषणं देयम् । तेन 'वेदाः प्रमाणम्' इत्यादौ प्रमाणपदोत्तरैकत्वस्य प्रमितिकरणत्वेऽन्वयः । तथा च एकत्वविशिष्टं यत्प्रमितिकरणत्वं तादृशप्रमितिकरणतावन्तो वेदाः इति बोधः । प्रयोजनं चात्र वेदानामृग्यजुःसाम्नामतिरात्रे षोडशिनं गृह्णाति, उदिते जुहोति इत्यादिकऋग्भिः परस्परं विरोधेनाप्रामाण्यमिति चार्वाकोक्तिनिरासः । प्रकृतेऽपि तृणारणिमणिस्थले दाहं प्रतितृणस्य अरणेः मणेर्वा स्वतन्त्रं फलोपधायकतावदत्रापि इति यत्कैश्चिदुक्तं 'प्रत्येकपर्याप्ता फलोपधायकता' इति न तथा, किन्तु अत्र फलोपधायकता व्यासज्यवृत्तिरेव ( घटं प्रति कुलालचक्रदण्डचीवरादीनां फलोपधायकताया व्यासज्यवृत्तित्वेन तत्र कस्यचिदेकस्याप्यभावे घटरूपकार्यानुपपत्तिवत् ) इति बोधनमेव प्रयोजनम् । तथा च घटं प्रति करणानां दण्डानामाम्रपनसादिभेदेन बहुत्वेऽपि कारणतावच्छेदकं दण्डत्वं यथा एकं तथैवात्रापि कारणतावच्छेदकमेकत्वविशिष्टं समुदायत्वमेकमेवेत्येवं बोधः पर्यवस्यति । 'काव्यत्वावच्छिन्नकार्यतानिरूपितफलोपधायकतावच्छेदकं यदेकत्वविशिष्टं समुदायत्वं तद्वदन्तःशक्तिनिपुणताभ्यासा' इति ।

ननु 'नह्येकं कारणं पर्याप्तं कार्यं साधयितुम्' इत्याद्युक्त्या कार्यमात्रं प्रति कालः ईश्वरेच्छा इत्यादीनां कारणत्वेन तृणारणिमणिस्थलेऽपि तृणस्य काल ईश्वरेच्छा इत्यादीनां समुदायत्वेन कारणतास्तीति कथं तदपेक्षयात्र भेदः इति चेदुच्यते । घटं प्रति कुलालदण्डचक्रचीवरादीनां यथा समुदायत्वेन कारणतेति तत्रैकस्याप्यभावे कार्यं नोत्पद्यते इति वक्तुमशक्यम् । प्रकृते तु एवं काल ईश्वरेच्छादिसहितशक्त्याद्यन्यतमस्य लोकोत्तरवर्णनारूपकाव्योत्पत्तिं प्रति कारणतया नास्ति । किन्तु शक्तिनिपुणताभ्यासानां चक्रचीवरादिवत् समुदायत्वेन कारणतेत्येवं वैलक्षण्यमवगन्तव्यम् ।

प्र० ६—काव्यस्य लक्षणं सोपपत्तिकं निपुणं निरूपयत।

उ० ६—'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति कारिका एवमस्य कारणमुक्त्वा सम्प्रति काव्यस्वरूपमाह—'तददोषौ' इति। शब्दार्थौ तदित्यन्वयः। दोषः साक्षात्परम्परया वा रसप्रतिबन्धकः गुणः। समवायवृत्त्या काव्यशोभाकरः। गुणानां रसनिष्ठत्वात् तद्व्यञ्जकमधुरादिवर्णपरं गुणपदमुपचारात्। ननु सालङ्कारत्वविशेषणानुपन्यासात् अनलङ्कारे काव्यलक्षणमतिव्याप्तमित्यत आह 'अनलङ्कृती पुनः क्वापि' इति। सर्वत्र सालङ्कारावेव शब्दार्थौ काव्यम्। क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वक्षतिः। नञोऽल्पार्थकत्वात्। तस्यास्फुटत्वे एव पर्यवसानात्। यत्तु नीरसेऽप्यस्फुटालङ्कारे काव्यत्वमिति तन्न। रसालङ्कारयोरेव चमत्कारहेतुत्वात्। तथा च रसवत्त्वे स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिर्न तु रसाभावे। क्वापीत्यस्य यत्र रसादीनामवस्थानं तत्रेत्यर्थः। नीरसेऽप्यनलङ्कारे किंनिमित्तश्चमत्कारः स्यात्तस्मादलङ्कारमात्रत्वं न विशेषणम्। किन्तु स्फुटालङ्काररसान्यतरत्वम्।

यत्तु नवीना दोषाणां दुष्परिहारतया 'वाक्यं रसात्मकं काव्यम्' इति सदोषस्यापि काव्यत्वमङ्गीकुर्वन्ति। तथा हि निर्दोषं काव्यं प्रविरलविषयं वा स्यात्। 'कीटानुविद्धरत्नादिसाधारण्येन काव्यता। दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः' इति। तत्र दोषसामान्याभावस्यैव तल्लक्षणत्वात्।

अथ विशिष्टस्वरूपमाह—तददोषाविति। अदोषौ शब्दार्थौ काव्यम्। अत्र दोषपदेन दोषसामान्याभाववत्त्वं चेत्काव्यलक्षणमुच्यते तदा 'न्यक्कारो ह्ययमेव' इत्यादिश्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यादिति चेदिष्टापत्तिः। तादृशकाव्यस्यैतल्लक्षणोद्देश्यतावच्छेदकानाक्रान्तत्वान्नैतत्काव्यसामान्यलक्षणम् अपि तु कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपर्यवसायियशआदिप्रयोजकलोकोत्तरवर्णनात्मकस्य काव्यस्य। न हि दुष्टेषु काव्येषु यशआदिप्रयोजकता सम्भवति। नन्वेवं तर्हि दुष्टं काव्यमिति व्यवहारः कथम्, तस्य भवन्मतेऽकाव्यत्वादिति चेन्न, दुष्टो हेतुरितिवत् तस्यौपचारिकत्वेनादोषात्। तत्र च हेतुपदेन हेतुत्वाभिमतस्य ग्रहणात्। ततश्च 'न्यक्कारो ह्ययमेवे'त्यत्र न तादृशविशिष्टकाव्यमित्येव सिद्धान्तः। एतेन 'कीटानुविद्धरत्नादिसाधारण्येन काव्यते'त्यादिमतमपास्तम्।

शब्दार्थाविति। तच्च काव्यत्वं शब्दार्थोभयव्यासक्तम्। तथा हि काव्यं

पठतीत्यादिप्रयोगदर्शनेनार्थस्य पठनासम्भवाच्छब्दपाठमात्रेण तथा व्यवहारा-च्छब्दे, शब्दपाठमात्रेण काव्यप्रयोजनस्य रसास्वादस्य प्रवृत्तिनिवृत्योर्वा अभावे-नार्थेऽपीत्युभयत्रावश्यं स्वीकार्यमिति भावः। यत्तु कैश्चिच्छब्दमात्र एव काव्य-त्वमित्युक्तम्, तन्न। मूलमात्राध्येतुः काव्यज्ञ इति व्यवहारादर्शनात्। किन्तु शब्दापेक्षया अर्थाश्रितानामलङ्काराणां गुणानां दोषाणामर्थ-शक्तिमूलध्वनेः आधिक्येन प्रतिपादनादर्थस्य काव्यत्वे विस्तरस्यानुपयोगात्तत्रापि काव्यत्वमवश्यं स्वीकार्यमेव। 'काव्यं श्रुतम् अर्थो न ज्ञातः' इत्यादौ प्रयोगोपपत्तिस्तु 'समुदाये प्रवर्तमानः शब्दः एकदेशेऽपि वर्तते' इति भाष्योक्त्या एकदेशे व्यवहारमादाय, यथा वस्त्रैकदेशे दग्धे वस्त्रं दग्धमिति तथा तैलं भुक्तं, घृतं भुक्तं, पूर्वे पाञ्चाला इत्यादौ।

सगुणाविति। ननु गुणानामुत्कर्षमात्राधायकतया काव्यलक्षणे तदुपन्यासो व्यर्थ इति चेन्न। दोषाभावस्य हेयतापादकत्वाभावेऽपि नोपादेयतापादकत्वम्; अपि तूपेक्षणीयकत्वम्। न हि निर्गुणस्य दोषाभावमात्रेणोपादेयता दृश्यते। तादृशोपेक्षणीयविषयाणां बहुशो वर्त्तमानत्वात्। सगुणत्वं तु समवायवृत्त्या काव्यशोभाकरत्वं लक्षणेऽवश्यं वाच्यम्। अलङ्काराणां तु लोकवत् सर्वदाऽनव-स्थानात् तेषां संयोगवृत्त्या वर्तमानतया क्वचित् ( यत्र रसस्य स्फुटं प्रतीतिः ) तद्भावेऽपि न काव्यत्वहानिः। तथापि 'न कान्तमपि निर्भूषं विभाति वनिता-ननम्' इति दिशा अलंकाराः काव्यशोभाकराः इति तेषां स्थितिरावश्यकीति-अत उक्तम् 'अनलङ्कृती पुनः क्वापि' इति।

**प्र० ७—'अनलङ्कृती पुनः क्वापि' इति काव्यलक्षणाङ्गं प्रतिपाद्य सोदाहरणविमर्शपुरःसरं सुष्ठु व्याख्यायताम्।**

उ० ७—'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति काव्य-लक्षणम्। तत्र 'अनलङ्कृती' इति द्विवचनं 'शब्दार्थौ' लक्षयति। अतस्तस्य विग्रहः न विद्यतेऽलङ्कृतिर्ययोस्तौ इति सम्पद्यते। अत्र नञ्पदमल्पार्थकत्वेन बोध्यम्, न त्वभावार्थकम्। नञोऽर्थाः षट् प्रकीर्तिताः, यथा—'तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता। अप्राशस्त्यमभावश्चे'ति। अल्पार्थकत्वमत्र 'अस्फुटार्थकत्वम्' तेन सह पुनः क्वापि इति पदद्वयेन वृत्तिं दर्शयति—यत्सर्वत्र सालंकारौ, क्वचित् स्फुटालंकारविरहेऽपि ( रसत्वे ) न काव्यत्वहानिरिति। अत्रेदं बोध्यम्। यत्तु नीरसेऽप्यस्फुटालंकारे काव्यत्वमिति तन्न। रसालंकारयोरेव चमत्कारहेतुत्वात्।

तथा च रसवत्त्वे स्फुटालङ्कारविरहेऽपि न काव्यत्वक्षतिः न तु रसाभावे। अतः 'क्वापि' इत्यस्य यत्र रसादीनामवस्थानं तत्रेत्यर्थः। नीरसेऽप्यनलङ्कारे किन्निमित्तश्चमत्कारः स्यात्। तस्मादलङ्कारमात्रत्वं न विशेषणम्। किन्तु स्फुटालङ्कारे रसान्यतरत्वम्। अलङ्काराणान्तु लोकवत्सर्वदाऽनवस्थानात् तेषां संयोगवृत्त्या वर्तमानतया क्वचित् (यत्र रसस्य स्फुटप्रतीतिः) तदभावेऽपि, न काव्यत्वहानिः। तथापि 'न कान्तमपि निर्भूषं विभाति वनिताऽऽननम्' इति दिशा अलङ्काराः काव्यशोभाकरा इति तत्सत्ताऽप्यपेक्षिता। अत उक्तम्—'अनलङ्कृती पुनः क्वापि' इति। अत एव चन्द्रालोककारकृतोऽयमारोपः—'अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती। असौ न मन्यते कस्मादनुष्णमनलङ्कृती' इति, अत्र चरितार्थो न भवति। अत्र नञोऽभावार्थं मनसि निधायोक्तं तेन। काव्यप्रकाशेऽलङ्काराणामभावो न कदापि प्रतिपादितः। रसादिस्थले स्फुटालङ्कारविरहत्वमेव।

अत्रोदाहरणेन स्वाभिमतं विशदीकरोति तथा—'यः कौमारहरः' इति पद्यम् नन्वत्र चैत्रक्षपासु मालतीकदम्बविकासः कथम्? तयोः प्रावृषेण्यत्वादिति चेन्न। वसन्तस्य कुसुमाकरत्वात् सर्वेषां कुसुमानां तत्र विकाससम्भवादिति केचित्, परन्तु वसन्ते मालतीवर्णनस्य कविसमयविरुद्धतया नैतत् सम्यक्। अत एव कदम्बानिला इत्यस्य 'कदम्बाकारा अनिला' इति व्याख्यानेन न निर्वाहः। कदम्बसमाधानेऽपि मालतीवर्णनस्य 'मालत्यास्तु विशेषतः' इति विशिष्य कविसमयविरुद्धत्वात्। अतः चित्रानक्षत्रयुक्ताः क्षपा इत्येवोत्तरं वक्तव्यम्। ततश्च वर्षावसाने चित्रानक्षत्रयुक्तासु क्षपासु मालतीकदम्बवर्णनं सम्यगेव।

अत्रोदाहरणे स्फुटो न कश्चिदलङ्कारः। तथाहि कारणाभावेऽपि कार्योत्पत्तिर्विभावना। उत्कण्ठां प्रति वरगतनवीनत्वादि कारणम्। तदभावेऽप्युत्कण्ठारूपकार्योत्पत्तिर्विभावना। स च नवीनत्वाद्यभावो नाभावमुखेन 'स एव हि वरः' इत्यादिना वर्णित इति तस्यास्फुटत्वम्। अथवा 'कारणाभावे कार्योत्पत्तिर्विभावना' इत्यत्र 'कारणतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववर्णनं विभावने'ति तदर्थः। उत्कण्ठां प्रति कारणस्य वरगतनवीनत्वाद्यभावे यद्यपि 'स एव हि वरः' इत्यादिनाऽर्थादापतितस्तथापि न स शब्दतो वर्णितः इति विभावनाया अस्फुटत्वम्।

कारणसत्त्वेऽपि कार्यानुत्पत्तिः—विशेषोक्तिः। तथा च प्रकृतेऽनुत्कण्ठाकारणानां वरगतोपभुक्तत्वादीनां सत्त्वेऽपि उत्कण्ठाभावरूपकार्यानुत्पत्तिः। यद्यपि द्वितीया-

भावस्य पूर्वाभावप्रतियोगित्वरूपत्वादुत्कण्ठाभावाभावः उत्कण्ठारूपः 'चेतः समुत्कण्ठते' इत्यादिनोक्तः, तथापि नोत्कण्ठाभावाभावरूपेणेति तस्या अस्फुटत्वम्। यद्वा कार्यतावच्छेदकधर्मावच्छिन्नाभाववर्णने विशेषोक्तिः। ततश्चात्रोत्कण्ठाभावरूपकार्याभावस्यार्थादापतितत्वात् अस्या अपि अस्फुटत्वम्। 'चेतो न समुत्कण्ठते इति न' इत्युक्ता तु सा स्यात्।

यत्त्वत्र दर्पणकारः अत्र विभावनाविशेषोक्तिमूलस्य सन्देहसङ्कराद् अलङ्कारस्य ( सङ्करालङ्कारस्य ) स्फुटत्वमिति तत्प्रामादिकम्। विभावनाविशेषोक्त्योरस्फुटत्वेन तयोः सङ्करस्याप्यस्फुटत्वात्।

नन्वत्र श्रृंगाररसस्य स्फुटत्वाद्रसवदलङ्कारः स्फुट इति चेन्न। रसस्यात्र प्राधान्यात् अप्राधान्य एव तस्यालङ्कारस्याङ्गीकारत्वात्। इति।

**प्र० ८--काव्यभेदानुक्त्वा ध्वनिगुणीभूतव्यङ्ग्ययोश्च स्वरूपं प्रदर्श्य सोदाहरणं भवन्मतं विशदीक्रियताम्।**

उ० ८--काव्यप्रकाशकृता काव्यस्य त्रयो भेदाः प्रतिपादिताः उत्तममध्यमाधमभेदेन। तत्रोत्तमकाव्यस्य ध्वनिकाव्यमिति अपरपर्यायम्। तत्स्वरूपमाह-'इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः' इति। अस्यान्वयार्थ एवं भवति। इदं काव्यम् वाच्याद् अभिधावृत्तिप्रतिपाद्यार्थाद् व्यङ्ग्ये व्यञ्जनावृत्तिप्रतिपाद्येऽर्थे अतिशायिनि अधिकचमत्कारकारिणि सति उत्तमम्। तदेव बुधैः ध्वनिपण्डितैः 'ध्वनिर्' इत्युच्यते। यथा-उदाहरणम्--'निःशेषच्युतचन्दनं०' पद्यम्।

अत्र 'चन्दनस्य स्तनतटे निःशेषच्यवनमधरस्य रागराहित्यम्, नेत्रयोः प्रान्तभागेऽनञ्जनत्वम्, तनोः शरीरस्य कृशता तथा च रोमाञ्चोद्गमः' एतानि लक्षणानि दूतीसम्भोगस्य तथा वापीस्नानस्य च समानानि। अत्र नायिका तस्याः प्रियवरसकाशे दूती प्रेषितवती इति 'दूति' सम्बोधनेन सूचितं भवति, सा दूती नायिकां प्रत्यागत्य 'मया नायकं प्रति गत्वा बहुधा प्रसादितोऽपि नागतः सः अतोऽहं वापीं स्नातुं गता तदनन्तरमत्रागते'ति दूत्याः कथनं 'मिथ्यावादिनि' इत्युक्त्वान्नायिका तदनृतं मन्यते कथयति च त्वयाऽसदृशाचरणेन बान्धवजनानां कीदृशः पीडागमः सञ्जातः इति न ज्ञातम्। अतिपीडाकरं तवाचरणमिदानीं सञ्जातम्। इति कथयित्वा नायकस्य प्रतारणां दूतीसम्भोगेन नायिकाया विप्रलम्भोद्दीपनं मानसीं पीडां च व्यञ्जयितुं नायकस्य कृते 'अधम'शब्दस्य

प्रयोगं करोति । येन त्वं वापीं स्नातुं न गताऽसि, तस्याधमस्यान्तिकमेव रन्तुं गताऽसीति वाच्यादतिशायिनि व्यंग्ये सति तस्योत्तमकाव्यत्वं ध्वनिकाव्यत्वं वा ।

गुणीभूतव्यंग्यस्य मध्यमकाव्यस्य लक्षणं तु ग्रंथकृता एवमुक्तम्—'अतादृशि गुणीभूतव्यंग्यं व्यंग्ये तु मध्यमम्' इति । अतादृशि वाच्यादनतिशायिनि वाच्यापेक्षयाऽतिशयितचमत्कारानाधायके व्यंग्ये यत्र व्यंग्य वाच्याद् गुणीभूतमित्यर्थः । तदा तत्काव्यं मध्यमं गुणीभूतव्यंग्यं वोच्यते ।

व्यंग्यस्य वाच्यादनतिशयस्तु द्विप्रकारको न्यूनत्वेन तुल्यत्वेन च । अत्र न्यूनत्वस्योदाहरणं दत्तम् । 'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया' । इति अत्र 'नववेतसमञ्जरीमण्डितकरं ग्रामतरुणं मुहुः पश्यन्त्यास्तरुण्या मुखच्छाया नितरां मलिना भवति' इति वाच्यार्थः । व्यंग्यार्थश्च दत्तसंकेता काचिदुपनायिका तत्र न गता, उपनायकश्च अधुनैव वञ्जुललतासंकेतस्थाने गत्वैव प्रतिनिवृत्तः इति 'नवे'तिपदेन 'मञ्जरीसनाथकरम्' इति पदेन च व्यज्यते । व्यंग्यमिदं 'वारं वारं ग्रामतरुणं पश्यन्त्यास्तरुण्या मुखच्छाया मलिना भवति' इति वाच्यार्थान्नातिशयितम् । अत एव चमत्काराऽजनकम् । व्यंग्यमत्र गुणीभूतवाच्यमेवातिशयितम् । एवमिदं मध्यमकाव्यस्योदाहरणम् । तुल्यप्राधान्यस्योदाहरणं 'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये । जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते' इति पञ्चमोल्लासे दत्तम् । अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात्क्षयं करिष्यतीति व्यंग्यस्य 'अन्यथा दुर्मनायते' इति वाच्यस्य समं चमत्कारित्वमिति तयोस्तुल्यप्राधान्यम् । इदमपि गुणीभूतव्यंग्यमेव ।

**प्र० ९—व्याख्यायतामियं निम्नोद्धृता वृत्तिगता पङ्क्तिः काव्ये ध्वनिव्यवहारस्य समूलताप्रतिपादनाय—इदमिति काव्यम् । 'बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य' इति ।**

उ० ९—अत्रान्ते 'शब्दार्थयुगलस्ये'त्यनन्तरं 'ध्वनिरिति व्यवहारः क्रियते' इत्यध्याहृत बोध्यम् । इदं पदेन काव्यमिति प्रोक्तमेव । अत्र ध्वनिकाव्यमिति ज्ञातव्यम् । ध्वनिव्यवहारस्य समूलतामाह—बुधैरिति । बुधा अत्र वैयाकरणाः पतञ्जलिप्रभृतयः तथा च तदनुसारिणोऽपि आलङ्कारिका आनन्दवर्धनाचा-

र्यादयः। वैयाकरणानां मते ध्वनिशब्दस्य प्रयोगः प्रतिपाद्यते। प्रधानभूतस्फोट-रूपव्यङ्ग्यव्यञ्जकस्य शब्दस्येति। अस्य विग्रहः 'प्रधानभूतो यः स्फोटः तद्रूपं यद्व्यङ्ग्यं तद्व्यञ्जकस्य शब्दस्ये'ति, अर्थप्रत्ययरूपफलोत्पादकत्वात् स्फोटस्य प्राधान्यम्। स्फुटयति प्रकाशयति अर्थमिति स्फोटः। शब्देषु ये वर्णाः सन्ति ते क्षणिका आशुविनाशिनः। अर्थबोधे प्रत्येकवर्णानां कारणत्वे राजादिपदघटितैक-वर्णादपि राजविषयकबोधापत्तिः। वर्णसमुदायस्य कारणत्वे योग्यविशेषगुणानां स्वोत्तरोत्पन्नगुणनाशत्वादुत्तरोत्तरवर्णोत्पत्तिक्षणे पूर्वपूर्ववर्णध्वंसेन कारणाभावाद् बोधो न स्यात्। अतः पूर्वपूर्ववर्णसंस्कारसहितचरमवर्णश्रावणप्रत्यक्षस्य कारण-त्वस्वीकारेऽपि। संस्कारस्थितेरक्रमिकतया एकस्माच्छब्दात्तावन्मात्रव्युत्क्रम-वच्छब्दजन्यार्थबोधः स्यात्। ततश्च 'नदी' 'दीन' इत्येतयोः समानवर्णतयाऽन्यो-न्यमन्योन्यं बोधयेत्। इत्यर्थबोधे स्फोटाख्यं ब्रह्मैव (शब्दब्रह्मैव) कारणम्। अतो घटादिभिर्वर्णसमुदायरूपैः क्षणिकैः पदैः स्फोटरूपो नित्यः शब्दो व्यज्यते। अत एव वैयाकरणानां मते शब्दो नित्यः। तेन चाभिव्यक्तेनार्थः प्रतीयते। तादृशस्य प्रधानीभूतस्फोटव्यञ्जकस्य वर्णसमुदायस्वरूपस्य घटादिशब्दस्य 'ध्वनिः' इति वैयाकरणानां सञ्ज्ञा। अस्याशयस्तु शब्दानुशासने स्पष्टीकृतः-तद्यथा—'अयं गौः' इत्यत्र कः शब्दः किं यत्सास्नालाङ्गूलककुदखुरविषाणार्थ-रूपं स शब्दः' नेत्याह। द्रव्यं नाम तत् कस्तर्हि शब्दः। येनोच्चारितेन सास्ना-लाङ्गूलककुदखुरविषाणवतः सम्प्रत्ययो भवति स शब्दः। स एव लोके ध्वनिपर्यायः यथा शब्दं मा कुरु, शब्दकार्ययं माणवकः, इत्यत्र ध्वनिं मा कुरु ध्वनिकार्ययं माणवक इत्येवार्थो बोध्यते। अतो 'ध्वनिः शब्दः' इति महाभाष्ये प्रतिपादितम्। ततश्च यतो वैयाकरणैरेवं व्यवहारः कृतस्तस्मादन्यैरपि बुधैरा-नन्दवर्धनाचार्यप्रभृतिभिरालङ्कारिकैः स्वध्वन्यालोकप्रभृतिषु ग्रन्थेषु न्यग्भावित-मुपसर्जनीकृतम् अप्रधानीकृतं वाच्यं मुख्योऽर्थो येन तादृशस्य व्यञ्जने ध्वनने क्षमस्य योगस्य समर्थस्य शब्दार्थयुगलस्य तद्रूपस्योत्तमकाव्यस्य ध्वनिरिति व्यवहारः क्रियते इत्यर्थः। रसस्यात्र काव्ये प्राधान्यात् शब्दार्थयोश्च तद्व्यञ्जक-त्वात् अस्माभिरपि तयोर्ध्वनिरिति व्यवहारः कृतः इत्यापन्नम्।

इति प्रथमोल्लासः समाप्तः।



# अथ द्वितीयोल्लासः

प्र० १—शब्दानां कतिधा वृत्तिः स्वीक्रियते ? अलङ्कारेतरनयेषु अस्मिन् विषये किमभिप्रेतम् ? अलङ्कारनये को विशेषः ? इत्येतत् सर्वं सोपपत्तिकं प्रतिपाद्यत ।

उ० १—'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा' इति कारिका । अत्रेति काव्ये । शास्त्रे वैयाकरणानां मते बोधजनकतामात्रं शक्तिः । 'गङ्गायां घोष' इत्यादौ गङ्गाशब्दस्य तीरबोधकताऽस्तीति तदुपस्थितिः शक्तिलभ्यैव । सा च शक्तिर्द्विविधा प्रसिद्धाऽप्रसिद्धा च । तत्राद्याऽभिधेत्युच्यते । द्वितीया लक्षणेति च । व्यञ्जनाऽपि यद्यपि तैः स्वीकृता, परन्तु तस्याः स्फोटप्रतीत्यनुकूलता, नार्थप्रतीत्यनुकूलता । अर्थाभिधायकत्वं तु स्फोटस्येति, शब्दस्य शक्तात्मकत्वादेकविध्यम् ।

नैयायिकास्तु 'गङ्गायां घोष' इत्यत्र शक्त्या प्रवाहावच्छिन्नविषयकोपस्थितौ सत्यामेकसम्बन्धिज्ञानेन तीरविषयकोपस्थितौ निर्व्यूढायां तत्रेच्छाकल्पनप्रयासो व्यर्थ इति वदन्ति ।

तत्रालङ्कारिकाः । गङ्गाशब्देन शक्त्या प्रवाहज्ञाने सति लक्षणया च तीरस्योपस्थितौ वृत्तायां शैत्यपावनत्वादिप्रतीतिर्न स्यादिति तत्प्रतीतये 'व्यञ्जना' नासिका तृतीया वृत्तिरुपास्यते । न च शैत्यपावनत्वादिप्रतीतिर्मानसीति वाच्यम् । सर्वासामिव एतस्या अपि मानसत्वेऽपि गङ्गाशब्दान्वयव्यतिरेकाभ्यामेव तज्जन्यत्वस्य वक्तव्यतया प्रतीतेश्च वृत्तिं विना शब्दजन्यत्वासम्भवान्मध्ये तत्प्रयोजिका व्यञ्जनावृत्तिः स्वीक्रियते । इति वाचकव्यञ्जकलक्षकात्मकतया त्रैविध्यं शब्दस्य ।

तात्पर्यार्थोऽपि केषुचिद् । आकाङ्क्षायोग्यतासन्निधिवशाद्वाच्यादीनामर्थानां तत्तत्पदैर्बोधे सति सम्बन्धज्ञानं वाक्येन भवति । तत्र शक्तेः 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेन क्षीणतया सम्बन्धप्रीतये वाक्यपर्याप्ता तदन्यप्रतीतीच्छयाऽनुच्चारितत्वे सति तत्प्रतीतिजननयोग्यत्वरूपा तात्पर्याख्या वृत्तिः स्वीक्रियते इति मीमांसकाः तत्र पदपर्याप्ता अभिधा ज्ञाता सती कारणम् । तात्पर्याख्यवृत्तिस्तु स्वरूपसती कारणमिति विशेषः । एवमस्वीकारेऽश्रुतपूर्वाभिनवकविविरचिताद्वाक्यकदम्बकाद् बोधो न स्यात् । न च नैयायिकाभिमता-

काङ्क्षैव सम्बन्धज्ञाननिर्वाहेऽलं तात्पर्याख्यावृत्त्या इति वाच्यम् । देवदत्तस्य दर्शनमित्यादौ देवदत्तकर्तृकतत्कर्मकोभयबोधानुकूलाकाङ्क्षासत्त्वेन तत्रान्यतर-बोधस्य दुरुपपादत्वात् ।

ननु वक्त्रिच्छारूपतात्पर्यज्ञानेनैवान्यतरबोधे किमर्थमतिरिक्ता वृत्तिः स्वीक्रियते इति चेन्न । तादृशेच्छाया लौकिकवाक्येषु वक्तुं शक्यत्वेऽपि वैदिकवाक्येष्वपौरुषेयाणां तेषां वक्तुरभावात् । तदिच्छाज्ञानसम्भवात् । न चाध्यापकेच्छाज्ञानाधीनमेव तज्ज्ञानमिति वाच्यम् । अध्यापकस्याव्युत्पन्नदशायामपि व्युत्पन्नानां तदुच्चारितवाक्यात् बोधदर्शनात् । अत आकाङ्क्षानिर्वाह्या । वक्त्रिच्छारूप-तात्पर्यज्ञानासिद्धा वाक्यपर्याप्ता तात्पर्याख्या वृत्तिः स्वीक्रियते—इति अभिहितान्वयवादिनः ।

अत्रान्विताभिधानवादिनः—विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन वृत्तिज्ञानाधीनोपस्थितेः कारणत्वात् पदनिष्ठशक्यनिरूपकस्य सम्बन्धस्य प्रतीतिर्न स्याद्, यदि संसर्गताभिन्नविषयतासम्बन्धेन वृत्तिज्ञानाधीनोपस्थितेः कारणत्वमुच्यते, तदा कारणतावच्छेदकताविक्यप्रयुक्तं गौरवं स्याद् । अतो लाघवात्पूर्वोक्त एव कार्यकारणभावो वाच्यः । ततश्च पदनिष्ठशक्यनिरूपकत्वे सम्बन्धस्य प्रतीतिर्न स्यात् । इति सम्बन्धविशिष्टार्थे एव पदानां शक्तिः ननु तर्हि तस्यापि वृत्तिनिरूपकत्वे पदेनैव सम्बन्धज्ञानाच्छाब्दबोधस्यापूर्वानुपपत्तिरिति चेन्न । सम्बन्धत्वरूपेण सम्बन्धे ज्ञातेऽपि सम्बन्धविशेषस्य पदेनाप्रतीतेः ।

**प्र० २—सविस्तरं सोपपत्तिकं व्याख्यायताम्—'तात्पर्यार्थोऽपि केषुचित्', तथा 'वाच्य एव वाक्यार्थ' इत्यन्विताभिधानवादिनः' ।**

उ० २—तात्पर्यार्थोऽपि केषुचिदिति । अत्र पदैः, शक्त्या उपस्थितानामर्थानां पश्चादन्वयः स्वीकुर्वाणा अभिहितान्वयवादिनः । 'गङ्गायां घोष' इत्यादौ शक्त्या प्रवाहरूपार्थे उपस्थापिते 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति नयेन शक्तेर्विरतत्वाल्लक्षणया तीररूपेऽर्थे ज्ञाते प्रयोजनस्य शैत्यपावनत्वादेर्व्यञ्जनया प्रतीतिर्भवति । अत्र च सम्बन्धप्रतीतिः केनेत्याशङ्कायां नैयायिकाः—'यत्पदेन विना यस्याननुभावकता भवेद् आकाङ्क्षा', इत्युक्ताकाङ्क्षाज्ञानेनैवाधिकरणरूपार्थोपस्थितिरित्याहुः । परमेवं स्वीकारे देवदत्तस्य दर्शनमित्यादौ 'कर्तृकर्मणोः कृति' इति सूत्रेण कर्तृकर्मोभयरूपार्थे षष्ठ्या विधानात्सन्देहोत्पत्त्या सम्बन्धप्रतीत्यभाव-

प्रसङ्गः। यदि च नैयायिकाभिमतवक्त्रिच्छारूपतात्पर्यज्ञानस्यैव कारणत्वमुच्यते तदपि मीमांसकमते अपौरुषेयवेदे शुकाद्युच्चारितवाक्ये च वक्त्रिच्छाया अभावात् तादृशवाक्ये तात्पर्यज्ञानं न स्यात्। न च तत्राध्यापकेच्छाज्ञानेनैव तात्पर्यबोध इति वाच्यम्। अध्यापकानामव्युत्पन्नदशायामपि व्युत्पन्नच्छात्राणां बोधदर्शनात्। ततश्च मीमांसकाभिमते—'तदन्यप्रतीतीच्छायाऽनुच्चारितत्वे सति तत्प्रतीतिजननयोग्यत्वरूपा तात्पर्याख्या चतुर्थी वृत्तिः सम्बन्धज्ञानायावश्यं कल्पनीये'त्याहुः। एवञ्च देवदत्तस्य दर्शनमित्यादौ न दोषः। तदेवोपपादयति—आकाङ्क्षायोग्यतेत्यादिना। प्रतीत्यपर्यवसानमाकाङ्क्षा। अर्थाबाधो योग्यता। पदानामव्यवधानेनोपस्थितिः सन्निधिः। सैवासत्तिर्नाम। इत्यादिसहकारिकारणताज्ञानेन वक्ष्यमाणजातिगुणक्रियासंज्ञारूपाणामन्योन्यं सम्बन्धे जनयितव्ये तात्पर्यार्थः तात्पर्याख्यवृत्तिः, तया प्रतीतः विशेषवपुः वाक्याद्यपेक्षया विलक्षणशरीरः घटमानयेत्यादौ घटपदेन समोपस्थच्छिद्रत्वविशिष्टघटप्रतीतिवत्कर्मत्वादिसम्बन्धरूपोऽपदार्थोऽपि शक्त्याऽप्रतिपाद्यमानो वाक्यार्थः सम्बन्धः समुल्लसति बोधविषयो भवति।

अन्विताभिधानवादिनस्तु आवापोद्वापाभ्यामेव घटादेर्बोधदर्शनात् कथाप्रसंगे उच्चारितानां घटादिपदानां वैदेशिकस्य बोधाजनकत्वात् पदार्थान्तरेणान्वितानामेवाभिधानं बोधः। ततश्चान्वितो घटो घटपदशक्य इति तेषां मतम्। तन्मते च विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन वृत्तिज्ञानाधीनोपस्थितिः कारणमिति नियमः। तदुक्तं 'शाब्दो ह्याकाङ्क्षा शब्देनैव प्रपूर्यते' इति। एवञ्च सम्बन्धज्ञानं वृत्तिज्ञानाधीनोपस्थितिप्रयोज्यमेवास्ति। वृत्तिश्च शक्तिर्लक्षणा वा। तयोश्च स्वस्वार्थमुपस्थाप्य विरतत्वाद्विरतयोः पुनरुत्थानाभावात्। शाब्दबोधे सम्बन्धज्ञानस्य केनापि वक्तुमशक्यत्वात् प्रतीतेश्च दर्शनात् सम्बन्धविशिष्टेऽर्थे पदानां शक्तिरिति वदन्ति। तदेवोक्तं 'वाच्य एव वाक्यार्थ' इति।

**प्र० ३—'साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः' इति वाचकशब्दलक्षणस्य निर्दोषता प्रतिपाद्यताम्।**

**उ० ३**—अत्र 'अभिधत्ते' इत्यस्य अभिधया बोधयतीत्येवमेवार्थस्वीकारे वाचकशब्दवृत्तिव्यापारस्याभिधात्वेन स्वज्ञाने स्वज्ञानस्यापेक्षितत्वात् आत्माश्रयो दोषः स्यात्। अतः केवलं बोधयतीत्येवार्थो वाच्यः। अर्थं बोधयति स वाचक

इत्येवोच्यमाने 'गङ्गायां घोषः' इत्यादौ तीररूपार्थबोधकत्वाद् गङ्गाशब्दस्य वाचकत्वं स्यात्। अतः सङ्केतितमिति। सङ्केतश्च ईश्वरेच्छा अनादितात्पर्यरूपो वा ग्राह्यः प्रकृते गङ्गाशब्दे मतभेदेनोभयोरप्यभावान्न दोषः। एवमपि पञ्चवट्यादिपदेषु पञ्चानां वटानां समाहारः पञ्चवटीति समासात् पञ्चाभिन्नवटसमुदायविशिष्टस्य देशसामान्यबोधादतिव्याप्तिः। अत उक्तं साक्षादिति। उपस्थित्यन्तराव्यवधानेनेत्यर्थः। एवञ्च देशविशेषस्यैव प्रतीतेः सत्वान्नातिव्याप्तिः। साक्षादर्थं बोधयतीत्येवमुच्यते तदा द्वे अङ्गुल्यौ निर्दिश्य आनयेत्याद्युच्चारिते द्वित्वसंख्याकपदार्थानयनस्य बोधाच्चेष्टायामतिव्याप्तिः स्यादतः सङ्केतितमिति। चेष्टास्थले आधुनिकानां संज्ञया परिभाषात्वं न तु सङ्केतितत्वमिति न दोषः।

**प्र० ४—व्याख्यायतामियं पङ्क्तिस्तस्या आशयं बोधयितुम्। 'इहागृहीतसंकेतस्य शब्दस्यार्थप्रतीतेरभावात्सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः' इति।**

उ० ४—सङ्केत एव शक्तिः, सा च कुत्रचित् स्वरूपसती कारणम्। यथा वह्नौ दाहानुकूला शक्तिः अज्ञाताऽपि वह्निसम्बन्धमात्रेणावश्यं दाहं जनयति। पदे अर्थबोधानुकूलशक्तिस्तु ज्ञाता सत्येव कारणम्। अत एव वनौषधिवर्गस्यानेकपदानां सङ्केतग्रहाभावे न बोधः। सा शक्तिर्यस्य शब्दस्याव्यवहितोत्तरं यमर्थं बोधयति तस्मिन्नर्थे तस्य शब्दस्येति स शब्दस्तदर्थवाचकः। तदेवाह इहेति निर्दिष्टपङ्क्त्या।

**प्र० ५—व्याख्यायतां 'सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा' इति।**

उ० ५—सङ्केतविषयीभूतोऽर्थः कतिविध इति विभागं दर्शयति-'संकेतितश्चतुर्भेद' इति। संकेतग्रहविषयोऽर्थश्चतुर्विधो भवति जात्यादिरिति। जातिगुणक्रियासंज्ञारूपेणेत्यर्थः। अत्रेदं विचार्यते। किं व्यक्तौ शक्तिरुत जातौ? ननु प्रवृत्तिनिवृत्तियोग्यतया अर्थक्रियाकारितया व्यक्तावेव शक्तिरिति। गामानयेत्यादिवाक्येन गोव्यक्तेरेवानयनादिदर्शनात्। जातेश्चानयनासम्भवाद् अप्रयोजकत्वाच्च गोपदस्य सास्नादिविशिष्टगोव्यक्तावेव शक्तिरिति केचिद्वदन्ति। परमेवमुच्यमाने गोव्यक्तेर्नानात्वात् प्रतिव्यक्ति शक्तिकल्पनेन शक्त्यानन्त्यप्रसङ्गः। एकस्मिन् गवि गोत्वज्ञाने जाते कालान्तरेऽन्यगोदर्शनेन गोरूपार्थस्योपस्थितेः सत्वात् साध्या-

भाववद्वृत्तित्वलक्षणो व्यभिचारश्च। यतो गृहीतसंकेतायां व्यक्तौ विनष्टायां व्यक्त्यन्तरेऽपि बोधदर्शनान्नष्टव्यक्तिगततदव्यक्तित्वाभाववद्व्यक्त्यन्तरवृत्तित्वात्। किञ्च धर्मविशेषपुरस्कारेण शक्त्यग्रहे व्यक्तिमात्रबोधस्वीकारे 'गौः, शुक्लः, चलः, डित्थः' इत्यादीनां व्यक्तिरूपेणैव बोधतात्पर्यायतापत्तिरिति उपाधौ प्रकारीभूते धर्मे गोत्वादिरूपे शक्तिः। गोत्वे शक्तेः स्वीकारे च गोत्वस्यैक्यान्नानन्त्यव्यभिचारौ। स चोपाधिद्विविधः। वस्तुधर्मो घटत्वादिः वक्तृयदृच्छासन्निवेशितो नामरूपो डित्थादिश्च। तत्र वस्तुधर्मोऽपि द्विविधः। सिद्धः साध्यश्च, तत्र साध्यः क्रियारूपः अधिश्रयणादारभ्याधःश्रयणान्तं मध्ये विधियमानो दर्वीपरिवर्तनफूत्कारादिः। इत्थं साध्यस्तु पूर्वापरीभूतैकदेशोऽधिश्रयणाधःश्रयणादिक्रियारूपः। यदाहुः—'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥' इति। सिद्धस्तु द्विप्रकारकः। पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च। पदार्थस्य प्राणप्रदो नाम निरवच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयः। धर्मान्तराणां यो धर्मितावच्छेदकः, यस्य च धर्मितावच्छेदकमन्यन्नास्ति सैव जातिः। जननेन प्राप्यते या सा। यावत्स्थितिसम्बन्धिनीत्यर्थः। यथा नीलो घट इत्यादौ घटे विद्यमाना घटत्वरूपा। यद्यपि गोत्वसमकालिकमेव शुक्लादेः सम्बन्धित्वमस्तीति तत्रापि जातित्वमापतितम्। तथापि पाकाद्युत्तरं शुक्लादिसम्बन्धः कदाचिदपैति न तु गोत्वस्य सम्बन्ध इति प्राणप्रदत्वं गोत्वादेः। तदुक्तं वाक्यपदीये ( भर्तृहरिणा ) 'गोः स्वरूपेण न गौः नाप्यगौः गोत्वाभिसम्बन्धात्तु गौ'रिति। अयमर्थः—गौर्व्यक्तिः स्वरूपेण न गोव्यवहारविषयः नाप्यगोव्यवहारविषयः। गोत्वाभिसम्बन्धात्तु गोव्यवहारविषयः।

'विशेषाधानहेतुर्गुणः। गोत्वादिना लब्धसत्ताकं वस्तु शुक्लादिनेतरेभ्यो व्यावर्त्यते। नीलादयो हि घटादिकं सजातीयरक्तादिघटेभ्यो व्यावर्त्तयन्ति। डित्थादिशब्दानामिति। ननु तत्र क्वचित् डित्थस्वरूपो धर्मः पित्रा डवित्थपदेन सङ्केतिते डवित्थपदेन व्यवहारसम्भवात् तत्र डित्थादिसंज्ञाशब्दानां स्वरूपम् अन्त्यबुद्धिनिर्ग्राह्यम् अन्त्यबुद्ध्या पूर्वपूर्ववर्णश्रावणप्रत्यक्षजन्यसंस्कारसहितचरमवर्णश्रावणप्रत्यक्षे निश्चयेन बुद्धिसंवेद्यमिति नैयायिकाः। 'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च' इत्युक्त्या अखण्डपदस्फोटस्य स्वीकारात् संहृतक्रममिति वैया-

करणाः। अक्रमस्फोटाख्यं शब्दस्वरूपं वक्त्रा यदृच्छया डित्थाद्यर्थेषूपाधित्वेन कल्प्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति। अत्र प्रमाणमाह—'गौः शुक्लश्चलो डित्थ' इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरि'ति महाभाष्यकारः इति। शब्दानामर्थे या प्रवृत्तिः सेत्थं प्रकारचतुष्टयवती। नन्वेवं सति परमाण्वादीनां जातित्वं स्यान्न गुणत्वम्। तादृशपरिमाणस्य यावत्स्थितिसम्बन्धित्वाद् इति चेत्सत्यम्। जातिशब्दा एवैते। वैशेषिकमतानुसारेण तु तत्र गुणत्वव्यपदेशः।

जात्यादिरिति पक्षमित्थं व्याख्यायेदानीं जातिरेव वेति पक्षं निरूपयति। ननु पटादिनिष्ठानां शुक्लादिगुणानां गुडतण्डुलादिनिष्ठानां पाकादिक्रियाणाञ्च। भेदस्य प्रत्यक्षतः सिद्धौ नानात्वं स्यादिति चेन्न। वस्तुस्तेषामेकरूपत्वात्। भेदप्रतीतिस्त्वाश्रयौपाधिकीति। गुणक्रियायदृच्छाशब्दानामाश्रयभेदाद् भेदे प्रतीतिः वस्तुतः एकरूपत्वमेव। यथा एकस्यैव मुखस्य खड्गे तारल्यादि-विशिष्टा, मुकुरे स्वच्छा, तैले मलिना प्रतीतिः, न तु तत्र मुखानां वस्तुतो भेदः। एवं हि तद्गतशौक्ल्यं चाकचक्यादिविशिष्टं दुग्धगतं स्वच्छं शङ्खगतं मलिनमिति भेदेऽपि अभिन्नाभिधानप्रत्ययोत्पत्तिर्येन शुक्लादिना तत्सामान्यं नाम जातिः। तत्रैव लाघवात्संकेतोऽङ्गीकर्तव्यः। क्रियायामपि गुडतण्डुलसूपपाकादीनां वस्तुतो भेदेऽपि येन पाकत्वादिनाऽभेदः प्रतीयते तदपि जातावेवान्तर्भूतम्। संज्ञाशब्द-स्थले बालतरुणवृद्धशुकोदीरितानां डित्थादिशब्दानां भेदः शरीराणामवयवोप-चयापचयसद्भावात् व्यक्तिभेद एव वा, एवं सत्यपि येन डित्थत्वादिनाऽभेद-प्रतीतिः, तदपि सामान्यमेवेति जातिरेव प्रवृत्तिनिमित्तमित्याहुः। नैयायिका-दयस्तु—न व्यक्तिमात्रे शक्तिः, नापि जातिमात्रे, आद्ये आनन्त्याद्व्यभिचाराच्च, अन्त्ये व्यक्तिप्रतीत्यभावप्रसङ्गात्। तस्माज्जातिविशिष्टव्यक्तावेव शक्तिः। ततश्च शक्यतावच्छेदकं गोत्वादिकं जातिरिति नानन्त्यमिति वदन्ति। तद्धानिति। व्यक्तीनामानन्त्याज्जातेश्चानयनाद्यसम्भवाज्जातिविशिष्टव्यक्तावेव शक्तिरिति। बौद्धास्तु—(सौगताः) 'यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा अमी तस्मात्ते क्षणिकाः' इति सिद्धान्तरीत्या भावमात्रस्य क्षणिकत्वाज्जातिव्यक्त्यो-रपि तथात्वान्नित्यत्वाभावाद् आनन्त्याच्च जातौ व्यक्तौ वा सङ्केतस्य वक्तु-मशक्यतया तद्भेदाभावे तदनुक्ततायामतद्व्यावृत्तौ लाघवात्सङ्केत इति वदन्ति। तत्र किमयुक्तं किं युक्तमित्यादिरसनिरूपणरूपप्रकृतानुपयोगादत्र न प्रदर्श्यते।

ननु डित्थमानयेत्युक्ते सङ्केतसम्बन्धेन डित्थपदवन्तमानयेति बोधदर्शनात् तत्र डित्थपदस्य प्रकारीभूतत्वात् तस्य जातित्वाभावेन कथं जातावन्तर्भावः इत्यरुचेराह—

प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वेति । वस्तुतस्तु यत्र साक्षाज्जातेः प्रकारत्वाभावस्तत्र परम्परया जातिः प्रकारतया स्वीक्रियते, यथा दण्डीत्यादौ प्रकारीभूतस्य दण्डस्य जातित्वाभावेन महाभाष्योक्तरीत्या जातिगुणक्रियासंज्ञा-रूपचतुर्विधशब्दे एवान्तर्भावस्यावश्यं वक्तव्यतया गुणे क्रियायां संज्ञायां वा सर्वथाऽन्तर्भावासम्भवाद्दण्डे प्रकारीभूतस्य दण्डत्वस्य जातित्वमादाय परम्परया दण्डिशब्दस्यापि जातिवाचकत्वाज्जातिशब्देऽन्तर्भावो भवति तथैवात्रापि 'डित्थ'-पदस्य जातित्वाभावेऽपि डित्थपदे प्रकारीभूतस्य डित्थपदत्वस्य जातित्वेन परम्प-रया डित्थपदस्यापि जातिवाचकत्वान्तर्भावो भविष्यत्येवेति न दोषः ।

प्र० ६—सोपपत्तिकं व्याख्यायतामियं कारिका—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽरोपिता क्रिया ॥

उ० ६—मुख्यार्थबाधे इति । मुखमिव मुख्यः शाखादित्वाद्यत् । प्राथ-मिकप्रतीतिविषयो वाच्यार्थ इत्यर्थः । तस्य बाधेऽनुपपत्तिग्रहे । तद्योगे इति—तस्य लक्षणीयार्थेन सह योगे सम्बन्धे, रूढितः प्रयोजनाद्वाऽन्योऽर्थो यया वृत्त्या लक्ष्यते सा लक्षणा नाम । 'अथ'शब्दस्यार्थः अथवा वेति । 'लक्ष्यते—यत्सा' इत्यनेन 'यया वृत्त्या लक्ष्यते सा' इति बोध्यम् । इति कारिकाया अन्वयः ।

अथ विशेषप्रदर्शनम् । मुख्यार्थबाधे इति । अत्र मुख्योऽर्थो न व्युत्पत्ति-लभ्यः । अन्यथा गोशब्देन 'गच्छतीति गौः' इति व्युत्पत्त्या गमनक्रियाकारि-त्वरूपार्थे प्रतीतेः गोव्यक्तेर्बोधसिद्धये लक्षणाऽऽश्रयणीया स्यात् । लोके तु व्युत्पत्तिलभ्योऽर्थो नैव प्रतीयते । अपि तु गोशब्दश्रावणप्रत्यक्षव्यवहितोत्तर-काले गोरूपार्थस्य बोधो भवति इति तत्र गोशब्दस्य वाचकत्वमेव । तस्य बाधे वाच्यार्थस्य बाधे सतीति यावत् ।

तद्योगे । तेन मुख्यार्थेन योगे सम्बन्धे । सर्वथाऽसम्बद्धार्थप्रतीतौ तत्र शब्दे उपस्थितिशाब्दबोधानुकूलव्यापारद्वयकल्पनेन गौरवं स्यात् । सम्बन्धे च सति तज्ज्ञानाधीनलक्ष्यार्थस्योपस्थितौ तत्र शाब्दबोधानुकूलव्यापारमात्रपरिग्रहेणो-

पस्थित्यनुकूलव्यापारकल्पनाराहित्यप्रयुक्तं लाघवम् । तत्र लक्षणायां कैश्चिद् अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्च कारणमित्युक्तम् । तन्न । तात्पर्यानुपपत्त्यैव कार्यनिर्वाहे उभयत्र कारणत्वकल्पने गौरवात् । तथाहि—'काकेभ्यो दधि रक्ष्यताम्' इत्यादाविव 'यष्टीः प्रवेशय' इत्यत्रापि तात्पर्यानुपपत्तिरस्त्येव । न हि यष्टीः बहिः संस्थाप्य प्रविविक्षत्सु यष्टीः प्रवेशयेति प्रयोगः क्रियते । आवृत-देशावच्छिन्नसंयोगः प्रवेशपदार्थः स च यष्टिधारिणामिव यष्टीनामप्यस्तीति तात्पर्यानुपपत्तिरस्त्येवेति तस्या एवोपादानलक्षणाबीजता । रूढितः इति—'कर्मणि कुशल' इत्यादौ कुशग्राहिरूपमुख्यार्थग्रहमन्तरैव समुदायशक्त्या विवेच-कत्वादिरूपोऽर्थः प्रतीयते । 'राजपुरुष' इत्यादिवद्यद्यवयवशक्तिग्रहोत्तारमेव समुदायशक्तिग्रहो भवति तथापि न तत्रैवावयवार्थोऽत्र समुदायार्थघटकः, रथन्तरादिपदेषु रथन्तृषदजन्यतत्तत्पदार्थोपस्थितिपूर्वक एव समुदायशक्त्या साम-विशेषरूपोऽर्थो बोध्यते । परन्तु न तत्र रथादीनां समुदायार्थेन कश्चित् सम्बन्धः । अत्र तु कुशग्राहिरूपार्थेन सावधानत्वादिसम्बन्धो विवेचकत्वादेर-स्तीति रूढिः । पूर्वत्र तु न रूढिरिति भेदः । 'कर्मणि कुशल' इत्यादौ कुशलादि-पदे कुशकर्मकादानकर्तृदक्षरूपार्थे विवेचकत्वादिना सम्बन्धसद्भावात् तदर्थस्य लक्षणया प्रतीतिः । अत्र च 'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्' इत्युक्तदिशा प्राधान्यतो लक्ष्यार्थस्य बोधः । यत्तु 'कलिङ्गः साहसिकः' इत्यत्र कलिङ्गशब्दस्य तद्देशवासिनि लक्षणेत्युक्तम् । तन्न । 'जनपदशब्दात्क्षत्रियादञ्' इति सूत्रे जनपदक्षत्रियवाचकयोरित्युक्त्या कलिङ्गादिशब्दानां देशे देशवासिनि च वाचकस्यैव स्वीकारात् । अनादितात्पर्यवती निरूढा लक्षणा । तदुदाहरणं 'कर्मणि कुशल' इति । ततश्च तत्र मुख्यार्थप्रतीतिव्यवहितत्वान्निरूढित्वम् तेन च सम्बन्धाल्लक्षणात्वम् ।

अथ प्रयोजनात्—अथवा 'गङ्गायां घोषः' इत्यत्र तु प्रवाहे घोषाधारत्व-मनुपपन्नम् । प्रवाहस्य तीरे सामीप्यादिसम्बन्धः । शैत्यपावनत्वाद्यतिशयप्रतीतिः प्रयोजनमितीयं प्रयोजनवती लक्षणा । स च व्यापारो यद्यपि अर्थनिष्ठस्तथापि स शब्दे आरोप्यते इति साऽऽरोपिता क्रियेत्याहुः ।

**प्र० ७—व्याख्यायन्तामिमास्तिस्रः कारिका ग्रन्थकृदुक्तसरण्या चाक्षेपसमाधानपूर्वकं यत्र तयोरावश्यकता प्रतीयेत ।**

(१) स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥
(२) सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।
विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥
(३) भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा ॥

उ० ७—यदा प्रयोजनवत्यां लक्षणायां प्रवाहरूपार्थेन तीरविषयकोपस्थितिर्न भवति तदा कथं गङ्गापदनिष्ठलक्षणाज्ञानाधीनतीरविषयकोपस्थितिरिति चेदत्र ब्रूमः । 'शाब्दी काङ्क्षा शब्देनैव प्रपूर्यते' इति सिद्धान्तात् शब्दं विनाऽर्थबोधनासम्भवात् गङ्गाशब्दे उपस्थापकता आरोप्येत इति । साऽत्र लक्षणा द्विविधा । यत्र शक्यार्थस्यान्वयसिद्धये परार्थस्योपस्थापनं सा उपादानलक्षणा । यत्र परार्थान्वयबोधार्थस्य त्यागः सा लक्षितलक्षणा चेति । 'कुन्ताः प्रविशन्ति' इत्यादौ (आवृतदेशावच्छिन्नसंयोगानुकूलो व्यापारः प्रवेशपदार्थः) प्रवेशः कुन्तधारिपुरुषाणामिव कुन्तानामप्यस्ति । न खलु कुन्तधारिपुरुषाः कुन्तान् बहिः संस्थाप्य प्रविशन्तीति कुन्तानुपादाय कुन्तधारिपुरुषा लक्ष्यन्ते इत्येषोपादानलक्षणा । अत्र हि नैयायिकाः—अरुणादिपदानामारुण्ये शक्तिः आरुण्यविशिष्टे लक्षणेत्याहुः । हेतुश्चात्र वदन्ति । 'शक्यघटिते शक्तिर्न स्वीक्रियते' इति कथमिति चेत्, शक्तिर्नामेश्वरेच्छा सा चानुमेया । घटपदोच्चारणेन घटरूपार्थस्योपस्थित्या घटरूपार्थे ईश्वरेच्छा कल्पयितुं शक्या । आरुण्यविशिष्टे तु 'गुणगुणिनोः समवायः' इति समवायसम्बन्धज्ञानाधीनोपस्थितिर्भविष्यत्येवेति 'अनन्यलभ्यो हि शब्दार्थः' इत्युक्त्या तत्र लक्षणैव शक्तिरिति वदन्ति । तथैव जातिशक्तिवादिनो मीमांसकाः—गोत्वे शक्तिः गोत्वविशिष्टव्यक्तौ 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इत्युक्त्या शक्तेर्वक्तुमशक्यत्वेन जातिव्यक्त्योः समवायसम्बन्धस्य क्लृप्तत्वाच्छक्यसम्बन्धरूपा लक्षणेत्याहुः । परन्तु लक्षणायां कारणस्य प्रयोजनस्य ईश्वरेच्छाया अनादितात्पर्यरूपरूढेर्वा अभावेन तत्र लक्षणाया अनवसरात् । व्यक्तेः प्रतीतिस्तु व्यक्ति विना जातेरनुपपन्नत्वेन 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति आक्षेपादेव तदेवानुमानम् । व्याप्येन गोत्वेन व्यापकस्य गोत्वविशिष्टस्य व्यक्तेरनुमानम् । 'कुन्ताः प्रविशन्ती'त्यादौ कुन्ताः कुन्तधारिपुरुष-

व्याप्या न भवन्तीति नानुमानावसरः। अनुपन्नस्याक्षेपे दृष्टान्तात्प्रदर्शयति। क्रियतामित्यत्रेति। आख्यातार्थः कर्म कृधात्वर्थः कृतिः, यस्याश्च साश्रयत्वेन कर्तुराक्षेपः। कुर्वित्यत्र कृतेः सविषयत्वेन कर्मण आक्षेप एव 'प्रविश पिण्डीमि'-त्यादावपि ज्ञेयम्।

यत्तु 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ दिवाभोजनरूपमुख्यार्थमादाय लक्ष्यं रात्रिभोजनं प्रतीयत इत्येषोपादानलक्षणेत्याहुः। तन्न। तथाविधाप्रत्यक्ष-स्थले पदाभावाल्लक्षणाया वक्तुमशक्यतया दृष्टार्थापत्त्यैव श्रुतस्थलेऽप्यर्थापत्त्यैव कार्यनिर्वाहे लक्षणाया व्यर्थत्वात्। 'गङ्गायां घोष' इत्यादौ तीरस्य घोषाधारत्व-सिद्धये शक्यार्थस्य प्रवाहस्य सर्वथा त्याग इत्येषा लक्षणलक्षणा। एषा चोपल-क्षणहेतुत्वात् लक्षणलक्षणेत्युच्यते। तदुक्तं साहित्यदर्पणे---'उपलक्षणहेतुत्वादेषा लक्षणलक्षणे'ति। उपलक्षणत्वं च---अविद्यमानं सद्व्यावर्तकम्। तदुदाहरणम्---'काकवन्तो देवदत्तस्य गृहाः' इति। तत्र तदानीं दृष्टस्य काकस्येदानीमविद्यमान-त्वेऽपि देवदत्तस्य गृहस्येतरगृहापेक्षया व्यावृत्तिः, एवं 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्देन तीररूपार्थे लक्षितेऽपि गङ्गातीरस्यैव प्रतीतिः, यमुनादितीराणां व्यावृत्तिरिति लक्षणलक्षणेति। अत्रोदाहरणद्वयेऽपि शुद्धैव लक्षणा। तदुक्तं---'भेदाविमौ चे'ति। सादृश्यसम्बन्धलक्षणा गौणी तदितरसम्बन्धमूला शुद्धेत्यर्थः। 'गङ्गायां घोषः' इत्यत्र प्रवाहतीरयोः परस्परव्यावृत्तधर्मप्रकारकबोधविषयं ताटस्थ्यम् औदासीन्यं नास्तीति शक्यतावच्छेदप्रकारकलक्ष्यविशेष्यकः प्रवाह-त्वेन तीरस्य बोधः, न तु प्रवाहत्वेन प्रवाहस्य तीरत्वेन तीरस्येति। ननु तीरे प्रवाहत्वं बाधितमिति कथं प्रवाहत्वेन तीरस्योपस्थितिरिति चेन्न। समवाय-सम्बन्धेन तीरे प्रवाहस्य बाधितत्वेऽपि स्वप्रकारकारोपविशेष्यत्वसम्बन्धेन बाधाभावात्।

तीरादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वेन प्रवाहत्वेन तीरस्योपस्थितौ शैत्यपावनत्वादेर्लाभः। गङ्गातटे घोषः---इत्याद्युच्चार्यमाणेऽभिधयैव तीरादेरु-पस्थितिरिति प्रयोजनस्य शैत्यपावनत्वादेर्न प्रतीतिरित्येव लक्षणायां भेदः।

एवं शुद्धालक्षणायां भेदद्वयमुक्त्वा गौणीलक्षणाभेदानाह---सारोपाऽन्येति। यत्रारोपविषयतावच्छेदकप्रकारिका आरोप्यमाणतावच्छेदकप्रकारिका च भेदेनोप-स्थितिस्तत्र सारोपा लक्षणा। आरोप्यमाणेनारोपविषये निगीर्णे सति साध्यवसाना लक्षणा। 'गौर्वाहीकः' इति सारोपाया उदाहरणम्। अत्रोच्यते। गौर्वाहीक

इत्यत्र गोत्वावच्छिन्नप्रतियोगिताकभेदाभाववान् वाहीक इति बोधः, वाहीकत्वावच्छिन्नप्रतियोगिताकभेदाभाववान् वाहीक इति बोधो वा। आद्येऽसम्भवः, वाहीके गोत्वावच्छिन्नप्रतियोगिताकभेदस्यैव सत्वात्। अन्त्ये घटो घट इतिवदभेदान्वयानुपपत्तिः। प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेद एवाभेदान्वस्य नियमात्। केचित्तु लक्षणाया जाड्यमान्द्यादयो गुणा लक्ष्यमाणाः प्रतीयन्ते ? गोगता वाहीकगता वा। गोगताश्चेत् सर्वथा बाधः गोगतगुणस्यान्यत्राविद्यमानत्वात्। वाहीकगताश्चेत् सामानाधिकरण्यं न सङ्गच्छेत। शक्येन साकं सम्बन्धाभावश्च नहि गुणाभिन्नत्वं वाहीकस्यास्ति तयोर्गुणगुणिनोः समवायसम्बन्धस्य नियतत्वात्। यदि च गोगतजाड्यवृत्तिजाड्यत्ववज्जाड्यपर्यन्तं लक्षणाऽङ्गीक्रियते तदापि सैवानुपपत्तिः, अतः सजातीयगुणाश्रयत्वेन वाहीकार्थ एव लक्ष्यते इत्येव साधुः। तथा च गोगतजाड्यवृत्तिजाड्यत्ववद्वाहीकगतजाड्यवती लक्षणा। ततश्च तयोरभेदान्वये स्वप्रकारकारोपविशेष्यत्वसम्बन्धेन गोत्वावच्छिन्नो वाहीक इति बोधः। जाड्यमान्द्यादिप्रतीतिश्च लक्षणायाः प्रयोजनम्। उक्तञ्च भट्टवार्त्तिके—'मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे। अभिधेयाविनाभूतप्रतीतिर्लक्षणेत्युच्यते। लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता'। 'गङ्गायां घोषः' इत्यादौ मुख्यार्थस्य प्रवाहस्य स्वीकारे प्रवाहे घोषाधारत्वासम्भवात् प्रत्यक्षादिप्रमाणान्तरेण विरोधे सति अभिधेयेन प्रवाहरूपार्थेनाविनाभूतं सम्बद्धं यत् तटादि तत्प्रतीतिकरणीभूतो व्यापारो लक्षणेत्युच्यते। गौर्वाहीक इत्यत्र लक्ष्यमाणस्य वाहीकस्य गुणैर्जाड्यमान्द्यादिभिर्योगाच्छक्यसम्बन्धाद् वृत्तेर्गौणता इष्टा गौणी लक्षणा भवतीत्यर्थः। अविनाभावश्चात्र सम्बन्धमात्रं न तु व्याप्तिः। तथा सति मञ्चाः क्रोशन्तीत्यादौ। मञ्चस्थपुरुषाणां मञ्चेन साकं व्याप्यव्यापकभावस्यासत्वात् लक्षणा न स्यात्। ननु क्रोशनस्य क्रियायाश्चेतनकर्तृत्वेन क्रोशनकाले मञ्चस्थपुरुषाणां मञ्चेन साकं व्याप्यव्यापकभावोऽस्त्येवेति चेद्, अनुमानेनैव प्रतीतिसिद्धौ लक्षणाया व्यर्थत्वं स्यात्। 'आयुर्घृतम्' इत्यत्र आयुष्कारणं घृतमिति कार्यकारणसम्बन्धसद्भावेन शुद्धा लक्षणा। चतुर्षूक्तोदाहरणेषु रूढ्यभावात् प्रयोजनमाह अत्रेति। गौर्वाहीक इति आरोप्यमाणारोपविषययोरुपादानात् सारोपास्थले ताद्रूप्यप्रतीतिः प्रयोजनम्। गौरयमित्यारोप्यमाणेनारोपविषये निगीर्णस्वरूपे साध्यवसानोदाहरणे अभेदप्रतीतिश्च प्रयोजनम्।

एवमायुर्घृतमित्यत्रोभयोपादानात् सारोपोदाहरणे दुग्धाद्यपेक्षया वैसादृश्येन प्रतीतिः। आयुरेवेदमिति साध्यवसानोदाहरणे नियमेनायुर्जनकत्वप्रतीतिः प्रयोजनम्। सम्बन्धान्तरे शुद्धा लक्षणेत्युक्तं तत्र सम्बन्धान्तराण्याह—क्वचित्तादर्थ्यादुपचार इत्यादिः। तथा च उपादानलक्षणा, लक्षणलक्षणा, सारोपा, साध्यवसाना, शुद्धा, गौणीत्युक्तभेदेन षड्विधा लक्षणा। इति।

प्र० ८—'गौरनुबन्ध्यः' इत्यादिकं जातिशक्तिवादिनो मीमांसका उपादानलक्षणामुदाहरन्ति। काव्यप्रकाशे तन्निरासः कृतः। तथा च 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्रापि तैरुपादानलक्षणैव स्वीकृता। तदेतदुभयं प्रकाशकारोक्तरीत्या सोपपत्तिकं निराकरणीयम्।

उ० ८—मण्डनमिश्राः 'गौरनुबन्ध्यः' इत्यादिकमुपादानलक्षणाया उदाहरणमाहुः। अनुबन्ध्यः आलम्भ्यः हन्तव्य इत्यर्थः। 'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इत्यादिश्रुताविदं वचनम्। मीमांसकानां मते जातौ शक्तिः। गौरनुबन्ध्य इत्यत्र गोत्वस्य जातेः श्रुतिविहितानुबन्धनक्रिया कथं सम्भवेदिति जातेरनुबन्ध्यानर्हत्वात् शक्तेश्च 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायेन गोत्वबोधनेन विरतत्वात्, व्यक्तिं विना जातेरनुपपन्नत्वाच्च जात्या व्यक्तिर्लक्ष्यते। ततश्च गोत्वरूपमुख्यार्थादायैव गोव्यक्तिर्लक्ष्यते इत्युपादानलक्षणेयम् इति वदन्ति। तदेतदपेशलम्। लक्षणाकारणस्य रूढेः प्रयोजनस्यात्राभावात्। न ह्यत्र प्रयोजनं किञ्चिदस्ति। रूढिर्वा काचित्। येन लक्षणाया अवसरः। ननु तर्हि भवन्मतेऽपि व्यक्तेः प्रतीतिः कथमिति चेदाक्षेपादेवेति वदामः। आक्षेपोऽत्रानुमानं न तु लक्षणा। व्यक्तिं विना जातेरनुपपन्नत्वादित्यविनाभावेन व्याप्तिर्दर्शिता। वृत्तिरयोज्योपस्थितिः शब्दादौ कारणम्। यथा च व्यक्तेरीदृशाक्षेपेण प्रतीतिस्तदुदाहरणद्वारा स्फुटीकरोति। यथा 'क्रियताम्' इत्यत्र कर्ता (कृतिः साश्रया गुणत्वादित्यनुमानेन कर्तुर्लाभः), कुर्वित्यत्र कर्म (कृतिः सविषया कृतित्वादित्यनुमानेन कर्मलाभः) अथवा तत्राद्यस्थले कर्मणः, द्वितीये कर्तुः लकारेणाभिधानात् कर्तृकर्मणोरेवाक्षेपात्प्रतीतिरिति। उक्तरीत्या गुरोर्मते अर्थाक्षेपे दृष्टान्तमुक्त्वा भट्टमते शब्दाक्षेपे दृष्टान्तमाह—'प्रविश' इत्यत्र 'गृहम्' इति कर्मपदं, 'पिण्डीम्' इत्यत्र 'भक्षय' इति क्रियापदम् यथाऽऽक्षिप्यते तथैव जात्या व्यक्तिराक्षिप्यते इति।

अपरे तु 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यादौ रात्रिभोजनं लक्ष्यते भोजनाभावसमानाधिकरणपीनत्वयुक्तोत्कर्षस्य प्रतीतेः प्रयोजनस्य सत्वात्, तत्र दिवाभोजनरूपमुख्यार्थमादायैव लक्ष्यं रात्रिभोजनं प्रतीयते इत्येषोपादानलक्षणेत्याहुः। तन्न। 'पीनो देवदत्तो दिवा न भुंक्ते' इति प्रत्यक्षस्थलेऽपि दिवाभोजनाभाववतः पीनत्वं रात्रिभोजनं विनाऽनुपपन्नमित्यनुपपत्त्या रात्रिभोजनप्रतीतेः। तथा चात्र पदाभावाल्लक्षणाया वक्तुमशक्यतया दृष्टार्थापत्त्येव श्रुतस्थले अर्थापत्त्यैवकार्यनिर्वाहे लक्षणाया व्यर्थत्वात्। यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः। यथा 'द्वारमि'ति शब्दः 'पिधेहि' इति क्रियापदम्। यत्र च दृष्टः श्रुतो वाऽर्थोनुपपन्नोऽर्थान्तरं कल्पयति सा अर्थापत्तिरिति, स्थलेऽत्र मतभेदेनोभयमपि सम्भवति।

**प्र० ९—'अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु 'गङ्गातटे घोष' इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः'। इतीयं पङ्क्तिः प्रकाशग्रन्थाशयं विशदीकुर्वता भवता समीचीनतया व्याख्येया।**

उ० ९—'गङ्गायां घोष' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थं प्रवाहरूपं सर्वथाऽर्पयतीति सैषा लक्षितलक्षणा। तन्मूलञ्च शैत्यपावनत्वाद्यतिशयप्रतीतिः प्रयोजनम्। इत्थमुभयरूपा उपादानलक्षणा लक्षणलक्षणा चेति शुद्धैव। तत्र सादृश्यसम्बन्धमूला लक्षणा गौणी, तदितरसम्बन्धमूला शुद्धा। 'गङ्गायां घोष' इत्यत्र प्रवाहतीरयोः परस्परव्यावृत्तधर्मप्रकारकबोधविषयताटस्थ्यमौदासीन्यमिति मुकुलभट्टाः। ते तु 'गौर्वाहीकः' इत्यादिगौण्यां लक्षणायां शक्यार्थलक्ष्यार्थयोः सादृश्याख्यसम्बन्धेनाभेदप्रतीतिरस्ति। शुद्धायां तु वाच्यार्थलक्ष्यार्थयोर्भेदः प्रतीयते तदेवौदासीन्यापरपर्यायं भेदप्रतीतिरूपं ताटस्थ्यं शुद्धाया गौणीतो भेदकम्। न तूपचारमिश्रणमित्याहुः। तदेव निराकर्तुमाहानयोर्लक्ष्यस्य तटस्य लक्षकस्य प्रवाहस्य न परस्परव्यावर्त्तकरूपं ताटस्थ्यमिति 'गङ्गायां घोष' इत्यत्र प्रवाहत्वेन तीरस्योपस्थितिर्भवति न तु प्रवाहत्वेन प्रवाहस्य तीरत्वेन तीरस्योपस्थितिः। तथा सति विशकलितयोस्तयोर्भेदारूपं ताटस्थ्यं स्यात्। अतः शक्यतावच्छेदकप्रकारकलक्ष्यविशेष्यक एव बोधो भवति। ननु तीरे प्रवाहत्वं

बाधितं तत्कथमुच्यते प्रवाहत्वेन तीरस्योपस्थितिरिति चेन्न। समवायसम्बन्धेन तीरे प्रवाहस्य बाधितत्वेऽपि स्वप्रकारकारोपविशेष्यत्वसम्बन्धेन तत्स्थितौ बाधाभावात्। तीरादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वेन प्रवाहत्वेन प्रतिपत्तौ शैत्यपावनत्वादेर्लाभः प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ 'गङ्गातटे घोष' इत्याद्युच्यमानेऽभिधयैव तीरादेरुपस्थितिरिति प्रयोजनस्य शैत्यपावनत्वादेर्न प्रतीतिरिति लक्षणाया भेदः।

**प्र० १०—विशदं व्याख्यायन्तां निम्नोल्लिखितपङ्क्तयः। 'अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्ति इति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे'। इति।**

उ० १०—'अत्र'-शब्देन 'गौर्वाहीकः' इत्यत्रेति बोध्यम्। स्वार्थेत्यादि। अत्र मुख्यार्थस्य गोत्वस्य वाहीके बाधितत्वात् तत्सहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा वाहीकार्थाभिधाने प्रवृत्तिनिमित्तीभवन्ति। शक्यतावच्छेदकत्वं प्राप्नुवन्तीत्यर्थः। ततश्च जडो वाहीक इति केचिदाहुस्तदसम्यक्। तथापि गोशब्देन तावत् किङ्गता गुणा लक्ष्यन्ते? गोगता वाहीकगता वा? गोगतत्वे हि बाधः प्रसज्येत। न हि गोगता गुणा वाहीके सम्भवन्ति। अथ वाहीकगतास्तत्सामान्याधिकरण्यं न सङ्गच्छेत। नहि गुणाभिन्नत्वं वाहीकस्यास्ति तयोर्गुणगुणिनोः समवायस्य क्लृप्तत्वात्। अत्रेदं पृच्छ्यते—गोशब्दाद्वाहीकार्थः प्रतीयते न वा। प्रतीयते चेद्वाहीको वाहीक इति 'घटो घटे' इतिवदभेदान्वयानुपपत्तिः। उद्देश्यविधेययोर्भेद एवाभेदान्वयस्य नियमात्। अथ न प्रतीयते इति यद्युच्यते तदा पृच्छामः। किं तर्हि गोशब्देन प्रतीयते? स्वगतगुणा न सम्भवन्ति सामानाधिकरण्यानुपपत्तेः। अथ यदा स्वगतजाड्यवृत्तिजाड्यत्ववज्जाड्यपर्यन्तं लक्षणा क्रियते तदा सैवानुपपत्तिः तदपि न सम्यक्। इदं पुनरत्र तत्त्वम्। गोशब्देन साधारणं लक्ष्यतावच्छेदकं जाड्यमान्द्यादिकमाश्रित्य वाहीको लक्ष्यते। साधारण्यं गोवाहीकोभयगतजाड्यगतजाड्यत्ववत्त्वेन। गोशब्दस्य गोगतजाड्यवृत्तिजाड्यत्ववद्वाहीकगतजाड्यत्ववति लक्षणा। ततश्च तयोरभेदान्वयेन जडो वाहीक इति बोधः। तदेवाह—साधारणगुणाश्रयत्वेन परार्थ एव प्रतीयते इत्यन्ये। तदुक्तमन्यत्र—'अभिधेया-

विनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इति। लक्ष्यमाणा जाड्यमान्द्यादयो गुणास्तैर्योगे शक्यसम्बन्धे सति गौणी लक्षणेति तदर्थः। अत्र चाविनाभावः सम्बन्धमात्रम्। न तु व्याप्तिः। 'गङ्गायां घोष' इत्यादौ प्रवाहतीरयोर्व्याप्तिग्रहेऽपि 'मञ्चाः क्रोशन्ती'त्यादौ तदभावात् न खलु मञ्चानां तत्स्थपुरुषैर्नाविनाभावः। किञ्च तयोरविनाभावे ह्याक्षेपेणैव तत्प्रतीतेर्न तत्र लक्षणोपयोगः।

प्र० ११—'तत्र व्यापारो व्यञ्जनात्मकः' इति कारिकांशेन लक्षणा, मूलव्यञ्जनाव्यापारं प्रस्तुत्य ग्रन्थकृता प्रयुक्तं 'विशेषाः स्युस्तु लक्षित' तत्रादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यां व्यापारान्तरेण गम्या। तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम्। इत्येतद् ग्रन्थकृत्प्रतिपादनं तदुक्तसरण्यैव शङ्कासमाधानपूर्वकं सम्यग्विविच्यताम्।

उ० ११—तत्र लाक्षणिके शब्दे प्रयोजनप्रतीतिसमर्थो व्यञ्जनात्मको व्यापारः। ननु लक्षणयैव प्रतीतिर्भविष्यति किमिति व्यञ्जना स्वीक्रियते इत्यत आह—यस्य प्रतीतिमिति। यस्य शैत्यपावनत्वादेः। प्रतीतिमाधातुं जनयितुं लक्षणा स्वीक्रियते 'गङ्गायां घोषः' इत्येवंरूपो लाक्षणिकः प्रयोगः क्रियते तत्र लाक्षणिकशब्दैकगम्ये गङ्गाशब्दान्वयव्यतिरेकानुविधायित्वादिति भावः। शैत्यपावनत्वादिरूपे फले व्यञ्जनादपरा क्रिया व्यापारो नेत्यर्थः। तथाहि नाभिधाव्यापारो वक्तुं शक्यः, समयाभावात्। समयः सङ्केतः। 'गङ्गायां घोषः' इत्यादौ गङ्गादिशब्दानां शैत्यपावनत्वादौ सङ्केताभावात् सङ्केतितार्थे एवाभिधायाः प्रसरात्। नापि लक्षणाव्यापारः। लक्षणाहेतूनां मुख्यार्थबाधादीनामभावात्। तदेवाह लक्ष्यं न मुख्यमित्यादिना। तीररूपोऽर्थो गङ्गापदशक्यो नास्ति। न वा तीरे घोषाधारत्वादेर्बाधः। नापि पावनत्वादिना तीरस्य सम्बन्धः प्रयोजनान्तरं वा, किञ्च गङ्गाशब्दस्तीरमिव पावनत्वादिकं बोधयितुं नार्हति इति न। वाच्यार्थस्य बाधे सति इतरार्थप्रतीतेर्वक्तुं शक्यत्वान्न चात्र तथा शब्दः स्खलद्गतिः। स्खलन्ती गतिर्यस्य एवंभूतः। बाधग्रह एव नास्तीति तात्पर्यम्। किञ्च लक्षणायां कथञ्चित् स्वीक्रियमाणायामपि तत्र रूढ्यभावात् प्रयोजनान्तरं वक्तव्यम्। तस्यापि प्रयोजनान्तरमित्यनवस्था स्यात्। ननु मास्तु प्रयोजनमात्रे लक्षणा। पावनत्वादिविशिष्टे तीरे लक्षणायां नोक्तदोषः। न च तत्र प्रयोजना-

भाव इति वाच्यम्। 'गङ्गायास्तटे घोषः' इत्यतोऽधिकार्थप्रतीतिरेव प्रयोजनत्वादत आह—प्रयोजनेनेति। प्रयोजनविशिष्टे तीरे लक्षणा न सम्भवति, कुतः ? इत्याह–ज्ञानस्येति। अयं भावः। कार्यकारणयोः पौर्वापर्यस्य व्यवस्थितत्वेन 'नीलो घट' इत्यादौ घटविषयकप्रत्यक्षोत्तरं (ज्ञातो घट इति) विषये ज्ञाततोत्पत्तिरूपं फल भवतीति भाट्टाः। सैव प्रकटता नाम। घटविषयकज्ञानवानहमित्याकारकानुव्यवसायापरपर्याया संवित्तिरेव फलमिति मुरारिमिश्रमतानुयायिनः। एवञ्च तीरोपस्थित्युत्तरभाविन्याः शैत्यपावनत्वादिप्रतीतेः समानकालिकत्वं न सम्भवतीति न प्रयोजनविशिष्टे लक्षणा वक्तुं शक्यते, तदाह विशिष्टे लक्षणा नैवमिति। तटादौ लक्षिते सति पावनत्वादयो विशेषाः प्रतीयन्ते तत्प्रतीतिकरणीभूतो व्यापारो व्यञ्जनध्वननद्योतनादिशब्दवाच्यः अवश्यं स्वीकार्यः।

प्र० १२—व्याख्यायतामियं कारिका—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया॥

उ० १२—व्यञ्जनानिरूपणावसरे सा व्यञ्जना द्विधा—शब्दनिष्ठा अर्थनिष्ठा चेति वक्ष्यते। तत्र शब्दनिष्ठा पुनरपि द्विधा—अभिधामूला लक्षणामूला च। तत्र यद्यप्यभिधायाः प्राथम्यादुपजीव्यत्वाच्च तन्मूला प्रथमं निरूपयितुमुचिता तथापि सुप्रसिद्धत्वाल्लक्षणायाः प्रकृतत्वाच्च तन्मूलामेव प्रथमं निरूपयति 'तत्र व्यापारो व्यञ्जनात्मकः' इति। तत्र लाक्षणिकशब्दे व्यापारो व्यञ्जनाप्रकाशानुकूलः। लक्षणादिनैव तत्प्रतीतौ किं तयेत्यत आह—यस्य प्रतीतिमिति। अनया कारिकयाऽर्थापत्तिरूपप्रमाणं प्रदर्शितं भवति। अत्र 'लक्षणा' इति पदं लक्षणया लाक्षणिकशब्दपरम्। यस्य शैत्यपावनत्वादिरूपफलस्य प्रतीतिं अनुभवरूपमाधातुं जनयितुं लक्षणा लाक्षणिकः शब्दः समुपास्यते आश्रीयते। सत्यपि वाचकशब्दे ('गङ्गायां घोषः' इत्यत्र) तं विहायाद्रियते। शब्दैकगम्ये लाक्षणिकशब्दमात्रगम्ये (न त्वनुमानादिगम्ये) अत्र तस्मिन् फले (नान्यतस्तत्प्रतीतिरपि तु तस्मादेव शब्दात्) शैत्यपावनत्वादिप्रयोजनविषयो व्यञ्जनाद् व्यञ्जनं विना व्यञ्जनं विहाय अपरा क्रिया अन्यो व्यापारो न इत्यर्थः। किन्तु व्यञ्जनात्मक एव व्यापार इति भावः। एवं लाक्षणिके शब्दे प्रयोजनबोधक्षमा व्यञ्जनाभिधो व्यापारः।

ननु लक्षणयैव प्रयोजनोपस्थितिनिर्वाहेऽलं व्यञ्जनयेत्याह—यस्य प्रतीतिमाधातुमिति। केवलं तटमात्रं यदि प्रतिपिपादयिषितं तर्हि, गङ्गातटे घोष' इत्येव वाच्यम्। अतस्तस्य प्रयोजनान्तरं वक्तव्यम्। तत्-सिद्धये एव लाक्षणिकशब्दप्रयोगः। सा च प्रयोजनसिद्धिः गङ्गाशब्दे सत्येव भवति, नान्यथा। अतः शब्दनिष्ठो व्यञ्जनाभिधो व्यापारः तत्प्रतीयते स्वीक्रियते। यतस्तस्य व्यापारान्तरेण प्रतीतिर्वक्तुं न शक्या इति।

प्र० १३—'हेत्वभावान्न लक्षणा' इत्यस्य क आशयः।

उ० १३—'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दस्य लाक्षणिकप्रयोगः शैत्यपावनत्वादिप्रयोजनप्रतिपत्तये कृतः। तत्र व्यञ्जनादृते नान्यो व्यापारस्तत्प्रतीतिमाधातुं प्रभवति। तथा हि नाभिधा समयाभावात्। समयः संकेतः। अभिधा संकेतसहायैवोपयुज्यते। 'गङ्गायां घोषः' इत्यादौ गङ्गादिपदानां शैत्यपावनत्वादौ संकेताभावात् संकेतितार्थे एवाभिधायाः प्रसरात्। नापि लक्षणाव्यापारः। अत उक्तम् 'हेत्वाभावान्न लक्षणे'ति। लक्षणायाः किल मुख्यार्थबाध-तद्योगरूढिप्रयोजनान्यतरच्च कारणम्। तदेतन्मुख्यार्थबाधत्रयम्। न ह्यत्र तेषां सत्ता तदेतोपपादयति 'लक्ष्यं न मुख्यम्' इति कारिकया। तथा—'लक्ष्य न मुख्यं, नाप्यत्र बाधो योगः फलेन नो। न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः' इति। 'गङ्गायां घोष' इत्यत्र गङ्गाशब्दस्य प्रवाहो मुख्योऽर्थः। तद्बाधस्तीरसम्बन्धश्च। तीरस्य लक्षणयोपस्थाने मुख्यशब्देन प्रतिपादयितुं शक्यस्य शैत्यपावनत्वादेः प्रतीतिः प्रयोजनमिति गङ्गाशब्देन यथा तटो लक्ष्यते तद्वद्यदि तटं मुख्यं स्यात् तस्यात्र बाधः प्रयोजनस्य च शैत्यादेस्तटेन सम्बन्धः स्यात्, तस्य च प्रयोजनान्तरं च किञ्चिद्भवेत्तदा गङ्गाशब्दः प्रयोजनं लक्षयेत्। न ह्यत्र तटं मुख्योऽर्थः नापि तत्र बाधः। तटे घोषाधारत्वस्य सत्त्वात्। न च गङ्गाशब्दार्थस्य तटस्य पावनीयत्वाद्यैर्लक्षणीयैर्धर्मैः सम्बन्धः (योगः फलेन नो) तटे तेषामभावात्। नापि प्रयोजनान्तरं येन लक्षणा स्यात्। किञ्च गङ्गाशब्दो न तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः। वाच्यार्थस्य बाधे सति इतरार्थप्रतीतेर्वक्तुं शक्यत्वान्न चात्र तथा शब्दः स्खलद्गतिः। स्खलन्ति गतिर्यस्य। एवंभूतः बाधग्रह एव नास्तीति तात्पर्यम्।

प्र० १४--समुपपाद्यताम् 'एवमप्यनवस्था स्याद् या मूलक्षयकारिणी' इति कारिकांशः।

उ० १४—प्रयोजनस्य लक्ष्यत्वमेव नास्तीति 'हेत्वभावान्न लक्षणे'त्यादिना प्रतिपादितम्। किञ्च लक्षणायां कथञ्चित् स्वीक्रियमाणायां तत्र रूढ्यभावात्प्रयोजनान्तरं वक्तव्यम्, तस्य पुनः प्रयोजनान्तरमिति अनवस्था स्यात्। बीजाङ्कुरन्यायेन अनवस्था न दोषायेत्याशङ्क्याह--'या मूलक्षयकारिणी मूलक्षतिकारिणी वे'ति प्रयोजनपरम्परायां लक्षणास्वीकारे प्रयोजनान्वेषणस्यापर्यवसानेन प्रस्तुतस्य पावनत्वादेस्तीरादेर्वा बोधानुदयप्रसङ्गः। 'मूलक्षतिकरीं चाहुरनवस्थां च दूषणम्' इति बीजाङ्कुरवदनवस्था न दूषणमित्यपास्तम्।

प्र० १५--'प्रयोजनेन सहितं लक्षणीयं न युज्यते' इत्यस्य कोऽर्थः।

उ० १५—ननु न केवलं प्रयोजनं लक्ष्यते किन्तु प्रयोजनसहितं तटादि, इत्यतो नोक्तदोषप्रसङ्गः। अत आह--पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते। 'गङ्गायास्तटे घोषः' इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति, इति शीतपावनादिविशिष्टे तटे लक्षणा, तत्किं व्यञ्जनयेति। ननु शैत्यपावनत्वादियुक्तमेव तटं गङ्गाशब्देन लक्ष्यते तत्किं व्यञ्जनया? न चात्र प्रयोजनाभाव इति वाच्यम् गङ्गाशब्देन लक्ष्यते इत्यतोऽधिकार्थप्रतीतिरेव तत्प्रयोजनत्वादित्यत आह-प्रयोजनेन सहितेति। अत्र लक्षणीयं लक्षणाजन्यज्ञानविषयः ( तटम् ), प्रयोजनेन प्रयोजनीभूतज्ञानविषयेण ( पावनत्वादिना ) सहितं न युज्यते इत्यन्वयः। कुत इत्याह—ज्ञानस्येति। अयमर्थः कारणकार्ययोः पौर्वापर्यं क्लृप्तम्। प्रत्यक्षादेर्नीलादिर्विषयः। तत्फलञ्च विषये ज्ञाततोत्पत्तिः विषयविनाशिस्मृत्युपपत्तेरात्मनि वा नीलविषयकज्ञानवानहमिति अनुव्यवसायः। शैत्यपावनत्वादिप्रतीतिश्च तीरोपस्थित्युत्तरभाविनीति तयोः सामानाधिकरण्यं न सम्भवतीति।

प्र० १६--व्याख्यायतां सूत्रमिदं 'ज्ञानस्य विषयो ह्यन्य फलमन्यदुदाहृतम्' इति।

उ० १६--अत्र 'हि' शब्दः प्रसिद्धार्थकतया दृष्टान्तार्थकः। 'अन्य' शब्दो ज्ञानादन्य इत्यर्थकः। एवमन्यदित्यपि ज्ञानादन्यदित्यर्थकम्। तथा च यथा ज्ञानस्य विषयो ज्ञानादन्यस्तथा ज्ञानस्य फलमपि ज्ञानादन्यत्। फलफलिनोः

समसमयसमुत्पादासम्भवात् । तत्र दृष्टान्तमाह—प्रत्यक्षादेरिति । अक्षमिन्द्रियं प्रति यदुत्पद्यते ज्ञानं तत्प्रत्यक्षम् । इन्द्रियार्थजन्यज्ञानमित्यर्थः । आदि-पदेनानुमानादेर्ग्रहणम् । अध्वरमीमांसकमतेनाह—प्रकटतेति । घटज्ञानानन्तरं 'ज्ञातो घटः' इति प्रत्ययात् तज्ज्ञानेन तस्मिन् घटे ज्ञातताऽपरनाम्नी प्रकटता जायते इति अध्वरमीमांसकमीमांसा । एवञ्च 'ज्ञेयधर्मः प्रकटता पूर्वमीमांसकैः प्रत्यक्षादिज्ञानस्य फलम् इत्युच्यते' इति भावः । तार्किकमतेनाह—'संवित्ति'-रिति । सति च घटज्ञाने 'घटमहं जानामि' इति प्रत्ययरूपा अनुव्यवसायापर-पर्याया संवित्तिर्घटज्ञानाज्जायते इति तार्किकतर्कः । एवञ्च 'ज्ञातृधर्मः संवित्ति-स्तार्किकैः मुरारिमिश्रादिभिः प्रत्यक्षादिज्ञानस्य फलमित्युच्यते' इति भावः । तथा च एतयोः ( प्रत्यक्षस्य ) विषयफलयोः प्रत्यक्षाद्भिन्नत्वं यथा सुव्यक्तं तथा लक्षणजन्यज्ञानात् तत्फलस्य पावनत्वादिज्ञानस्यान्यत्वमवश्यमेषितव्यमिति भावः । यथा कारणत्वेन ज्ञानाद् विषयो भिद्यते तथा कार्यत्वेन फलमित्यर्थः । अन्यथा तीरत्वपावनत्वज्ञानयोरभेदे जन्यजनकभावानुपपत्तेरिति । एवञ्च लक्षणा-जन्यज्ञानविषयत्वेन यत्फलस्य शैत्यपावनत्वादेर्लक्षणविषयत्वं न युक्तमित्यर्थः ।

प्र० १७—अभिधामूलव्यञ्जना ग्रन्थकारोक्तदिशा प्रतिपाद्यताम् ।

उ० १७—तत्र कारिका—'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैः वाच्यार्थधीकृद् व्यापृतिरञ्जनम्' इति । तथा च 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः । सामर्थ्य-मौचती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः' इत्युक्तदिशाग्रे व्याख्यानाय प्रक्रमते । इत्थं लक्षणामूलं व्यञ्जकत्वमुक्त्वाऽभिधा-मूलमाह—अनेकेति । अनेके अर्थाः वाच्यत्वेन यस्य तस्यानेकार्थस्य नानार्थ-कस्य शब्दस्य वाचकत्वे अभिधायां प्रकरणादिभिः नियन्त्रिते एकत्र सीमिते सति अवाच्यार्थः तदाभिधया प्रतिपादयितुमशक्यः । तद्धीकृत् तत्प्रतीतिहेतुः या व्यापृतिः व्यापारः सा अञ्जनं व्यञ्जनमित्यर्थः । अयं भावः । एकस्य वर्ण-समूहात्मनः पदस्यानेकत्रानेकैव शक्तिः । शक्यतावच्छेदकभेदेन तद्भेदात् । ततश्च यस्मिन्नर्थे तात्पर्यग्राहकं प्रकरणादिकमवतरति तद्गोचरशक्त्या तदर्थोपस्थापनम् । अन्यस्याश्च तिरोधानम् । तया निरुद्धतयाऽभिधया बोधयितुमशक्यार्थस्य बोधने प्रभवन्ती वृत्तिर्व्यञ्जना नाम । इयञ्चाभिधामूला शाब्दी व्यञ्जनेत्युच्यते इति

बोध्यम् । न तु श्लेषपदाभिधान एव द्वितीयार्थग्रहः स्यादिति शङ्कानिवारणायोक्तं—वाचकत्वे नियन्त्रिते इति । 'न च संयोगादिनाऽभिधावद् व्यञ्जनापि नियन्त्र्यतामिति वाच्यम् । संयोगादिकमतिक्रम्य बोधकत्वेन तत्सिद्धेः ।

संयोगादीनां वाचकत्वनियामकत्वे भर्तृहरिसम्मतिमाह—'संयोग' इत्यादिना संयोगः प्रसिद्धसम्बन्धः विप्रयोगो विभागः । साहचर्यं संभूयावस्थानम् । सादृश्यं वा । विरोधिता सहानवस्थानम् । अर्थः प्रयोजनम् । प्रकरणं वक्तृश्रोतृबुद्धिस्थता । लिङ्गं संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तो धर्मः असाधारणो धर्मो वा । व्यक्तिलिङ्गं पुंस्त्वादि । सामर्थ्यंकारणता । औचिती योग्यता । देशकालौ तद्विशेषौ । स्वरः उदात्तादिः । एवमेतैः शब्दवाच्यार्थस्यानवच्छेदे कतमोऽर्थोऽत्र विवक्षित इति संदेहे सति विशेषस्मृतिहेतवः विशेषस्य विवक्षितार्थस्य या स्मृतिर्ज्ञान तद्धेतवस्तज्जनका भवन्तीत्यर्थः ।

तत्र संयोगः प्रसिद्धार्थस्य गुणविशेषरूपः सम्बन्धस्तेनाभिधानियमनं यथा 'सशङ्खचक्रो' हरिरित्यत्र शङ्खादिसंयोगेनानेकार्थस्य हरिशब्दस्याच्युतेऽभिधा नियम्यते । अन्यहरिपदार्थे तत्संयोगाभावात् । विप्रयोगस्तावत्तत्सम्बन्धध्वंसः तेन यथा 'अशङ्खचक्रो' हरिरित्युच्यते । सम्बन्धस्य प्रतियोगिपूर्वकत्वात् । साहचर्यं सहचरता तेन यथा रामलक्ष्मणाविति रामपदस्य लक्ष्मणसाहचर्येण दाशरथौ । विरोधः सहानवस्थानं वध्यघातकभावश्च यथा रामार्जुनगतिस्तयोरिति रामार्जुनपदयोः भार्गवकार्त्तवीर्ययोः । अर्थः प्रयोजनम् तेन यथा 'स्थाणुं भज भवच्छिदे' इत्यत्र भवच्छेदनरूपप्रयोजनवशात् स्थाणुशब्दस्य हरेः । प्रकरणं वक्तृश्रोतृबुद्धिस्थता, तेन यथा 'सर्वं जानाति देव' इत्यत्र देवशब्दस्य राजनि । यत्तु 'युष्मदर्थे' इति व्याख्या तस्या अपि प्रकृते राजादावित्यर्थः । किंवा सम्बोध्ये राजादावित्यर्थः । लिङ्गं संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तो धर्मः । तेन यथा 'कुपितो मकरध्वजः' इत्यत्र मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसम्बन्धवता कोपेन मकरध्वजशब्दस्य कामे, यत्तु लिङ्गं चिह्नमिति तत्र कोपस्य कामचिह्नत्वभावात् । असाधारणधर्मस्य चिह्नत्वात् । सशङ्खचक्र इत्यत्रातिव्याप्तिप्रसङ्गाच्च शब्दस्यान्यस्य सन्निधिः । नियतार्थकशब्दान्तरसामानाधिकरण्यम् । अतो भवच्छिदे इत्यादावप्रसङ्गः । न च सशङ्खचक्रो हरिरित्यत्रातिव्याप्तिः । शङ्खचक्रशब्दसामानाधिकरण्याभावात् । यद्वा हरौ शङ्खचक्रे सति संयोगोदाहरणे तात्पर्यम् तेन यथा 'देवस्य त्रिपुराराते'रित्यत्र त्रिपुरारातिशब्दसामानाधिकरण्याद् देवशब्दस्य शम्भुरूपेऽमरे, अन्यस्य देवशब्दार्थस्य

राज्ञ स्त्रिपुरातित्वाभावात् । यत्तु देवान्तरस्यातथाभावाच्छक्तिनियमनं शम्भाविति तन्न युक्तम् । देवान्तरे देवशब्दस्य शक्तिभेदाभावाद् उदाहरणसामञ्जस्यापत्तिः । सामर्थ्यं कारणत्वम् । येन यथा 'मधुना मत्तः कोकिलः' इति । अत्र मधुशब्दस्य वसन्ते । अन्यस्य मधुशब्दार्थस्य कोकिलमादनासामर्थ्यात् । औचिती अर्हता तथा यथा 'पातु वो दयितामुखम्' इति । अत्रोत्कण्ठितमनोरथसाधनौचित्येन 'मुख' शब्दस्य साम्मुख्ये न तूपायादौ । यद्यप्यत्रापि सामर्थ्यं सम्भवत्येव तथापि मधुनेत्यत्र तृतीययेव तद्बोधाभावेऽपि औचितीमात्रज्ञानादेव शक्तिनियमन-सङ्कीर्णम् इति । देशेन यथा 'भात्यत्र परमेश्वरः' इति । अत्रेति राजधानीरूपाद् देशात् परमेश्वरपदस्य राजनि । कालेन यथा 'चित्रभानुर्विभाति' इति । अत्र चित्रभानुपदस्य दिवाकरे, रजन्यामाशुशुक्षणौ वह्नौ वा । व्यक्तिर्लिङ्गं पुंस्त्वा-दिस्तया यथा 'मित्रं भातीति' अत्र नपुंसकलिङ्गात् मित्रपदस्य सुहृदि । 'मित्रो भातो'त्यत्र पुंल्लिङ्गात्सूर्ये । स्वरस्तूदात्तादिर्वेदे बाहुल्येनार्थप्रतीतिकृद् दृश्यते । यथा 'इन्द्रशत्रो वर्धस्व' इति । अत्र 'इन्द्रशत्रो' इत्यत्रान्तोदात्तत्वे षष्ठी-तत्पुरुषव्यक्तौ इन्द्रस्य शातनकर्तृत्वं लक्ष्यते । पूर्वपादान्तोदात्ताद्बहुव्रीहौ च 'इन्द्रः शातयिता यस्य' इति इन्द्रस्य शातनकर्तृत्वं लक्ष्यते । काव्ये तु नैवं बाहुल्यम् । काव्येषूदात्तादीनां नार्थविशेषनियामकता । अत एवोक्तं— 'काव्यमार्गे स्वरो न गण्यते' इति । अत्र स्वरपदेनोदात्तानुदात्तस्वरितास्त्रयः । ननु काव्येऽपि स्वरो विशेषप्रतीतिकृदस्त्येव । यथा 'मथ्नामि कौरवशतम्' इत्यादौ काकुस्वरादिना विशेषार्थावगतेरिष्टत्वात् । अतोऽत्र स्वरशब्देनोदात्तादेरेव विवक्षितत्वात् । यद्वा अभिधानियामको स्वरः वेदे एवानुशासनात् न तु काव्ये । 'स्वरादयः' इत्यादिग्रहणादभिनयापदेशौ गृह्येते । अन्ये चोक्तान्तर्भूता । अभिनयश्च साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया तया यथा 'एद्दहमेत्त०' इति प्राकृतं पद्यम् । अस्य छाया—'एतावन्मात्रैर्दिवसैः' इति । अत्र विकसितमुकुलिताभिनवविशेषस्तनस्य पीनत्वमुकुलिताद्यर्थविशेषेऽभिधा नियम्यते । एवं विशेषपादत्रयेऽपि अपदेशोऽभिमतनिर्देशः तेन यथा । 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्र-तम्' । अत्रापदेशेनेदं शब्दस्याभिधा वक्तरि नियम्यते । इत्थं संयोगादिनाऽर्थान्त-राभिधायकत्वे निवारितेऽपि यत्र क्वचिदनेकार्थशब्देनार्थान्तरप्रतिपादनम् ।

तत्र नाभिधा:, एकत्रार्थे तस्या: नियतत्वात् । नापि लक्षणा, मुख्यार्थबाधाद्यभावात् । किं त्वञ्जनं व्यञ्जनमेव व्यापार: । तस्य च शब्दान्वयव्यतिरेकाभ्यां शाब्दत्वमिति उपरिष्टात्प्रतिपादितम् । 'भद्रात्मन' इत्यभिधामूलव्यञ्जनाया उदाहरणम् । अत्र प्रकरणाद्राजरूपार्थे नियन्त्रिते द्वितीयगजरूपार्थप्रतीतिरभिधामूलव्यञ्जनया । तद्युक्तो व्यञ्जनाव्यापारयुक्त: शब्दे व्यञ्जक: । ननुशब्दमात्रस्य व्यञ्जकत्वे कथं शब्दार्थयुगलस्य काव्यस्य ध्वनित्वमित्यत आह—यदिति, तथेति । अर्थोऽपि व्यञ्जकस्वशक्यप्रकृतार्थबोधान्तरमेव व्यङ्ग्यार्थबोधादर्थस्य सहकारित्वमित्यर्थ: ।

इति द्वितीयोल्लास: समाप्त: ।



# अथ तृतीयोल्लासः

प्र० १—अर्थव्यञ्जकताप्रतिपादनाय व्याख्यायतां निम्नोल्लिखितसूत्रवचनम्।

वक्तृ-बोद्धव्य-काकूनां वाक्यवाच्यान्यसन्निधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा॥ इति।

उ० १—पूर्वं शब्दे निरूपिते उपोद्घातेन शब्दव्यञ्जनायां निरूपितायां प्रसङ्गेनार्थव्यञ्जना निरूपणीया। तदेतदाशङ्क्यते—शब्दे निरूपितेऽवसरोऽयमर्थनिरूपणस्य। किञ्च अर्थे धर्मिणि निरूपिते तद्धर्मो व्यञ्जना सुनिरूपिता भवति। तत्कुतस्तमनादृत्याह—व्यञ्जनानिरूपणमिति। तदेनां शङ्कामपनिनीषुरुक्तं स्मारयति—'अर्थाः प्रोक्ताः पुरा तेषाम्' इति। अर्थाः वाच्यलक्ष्यव्यङ्ग्याः। अर्थस्य संनिकृष्टतरत्वेऽपि तेषामित्यनेन योग्यतया वाचकादयः शब्दाः परामृश्यन्ते। शिष्यावधानाय प्रतिजानीते—'अर्थव्यञ्जकतोच्यते' इति। ननु सर्वेषामित्यादिना ( सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते' इति कारिकार्थेन यत्पूर्वमुक्तम्। ) पूर्वमर्थानां व्यञ्जकता प्रोक्तैव। तदन्या कीदृशी सेत्याकाङ्क्षायामाह—वक्तृबोधव्येति। यः परप्रतिपत्तये वाक्यमुच्चारयति स वक्ता। न च कविस्तन्निबद्धो नायकादिश्च। बोद्धव्यः प्रतिपादनीयो जनः अन्तर्भावितत‍दर्थत्वात्। कायत्यर्थान्तरमिति काकुः। 'कै शब्दे' इति धातुः। अथवा काकुर्जिह्वा। तद्व्यापारविशेषसम्पाद्यत्वात् शोकभीत्यादिभिर्ध्वनेर्विकारः। तथा च साकाङ्क्षाणां पदानां समूहो वाक्यम्। शक्योऽर्थो वाच्यः। अन्यस्य वक्तृबोद्धव्याभिन्नस्य सन्निधिः। वाक्यवाच्याभ्यां सहितोऽन्यसन्निधिः वाक्यवाच्यान्यसन्निधिः। तेनेतरेतरद्वन्द्वे एकवद्भावो नपुंसकत्वं न। प्रस्तावः प्रकरणम्। देशो विजनादिः। कालो वसन्तादिः। आदिशब्दग्राह्यश्चेष्टादिः। तेषां वैशिष्ट्याद्वैलक्षण्यात्। तच्च वक्त्रादि प्रत्येकं सम्बध्यते। प्रतिभाजुषाम् प्रतिभा वासना। नवनवोन्मेषशालिनी बुद्धिः प्रज्ञा वा। तद्वतां काव्यवासनापरिपक्वबुद्धीनाम्। सहृदयानामिति यावत्। याऽन्यार्थधीः अन्यो वाच्यलक्ष्यव्यतिरिक्तो योऽर्थः व्यङ्ग्यरूपस्तद्धीस्तत्प्रतीतिः तद्धेतुर्योऽर्थस्य वाच्यलक्ष्यव्यङ्ग्यरूपस्य त्रिविधस्यार्थस्य व्यापारो व्यक्तिरेव।

व्यज्यतेऽनयेति करणव्युत्पत्त्या व्यञ्जनैवेति सूत्रार्थः। अत्र वैशिष्ट्यादिति पञ्चम्यर्थः सहकारिरूपं हेतुत्वम्। तच्च तद्भावे व्यञ्जनानुदयाद् बोध्यम्। एवं वक्त्रादि-वैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुर्व्यापारत्वमस्याः स्वरूपमिति बोध्यम्।

वक्ष्यमाणोदाहरणेषु वैशिष्ट्यविशेषोऽविदग्धानां दुर्ज्ञेय इति सूचयन् वृत्ति-कृदाह—क्रमेणोदाहरणानीति। वक्तृवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'अइपिहुलं' इति प्राकृतपद्येन। अस्य छाया—'अतिपृथुलं जलकुम्भं गृहीत्वा समागतोऽस्मि सखि त्वरितम्। श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम्' इति। जलाहरणवर्त्मनि नदीगहने उपनायकोपभुक्तायाः घर्मजलनिःश्वासाद्युप-भोगचिह्नेनोपभोगं सम्भावयन्तीं सखीं सम्बोध्य कस्याश्चिदुक्तिरियम्। अत्र प्रमाणान्तरेणासतीत्वेऽवगते सति व्यभिचारिणी वदतीति वक्तृवैशिष्ट्याद् वाच्यघटितवाक्यार्थस्य चौर्येण कृतं रतं गोपायतीति सामाजिकान् प्रतिभा-शालिनः प्रति व्यङ्ग्यमिति भावः। अत्र वक्त्री कामिनी। तस्या दुःशील-स्वरूपवैशिष्ट्यं विजानन्तं चौर्यरतगोपनं व्यक्तीभवति। अत्र शब्दपरिवृत्तिसहत्वा-दर्थस्यैवेयं वृत्तिः।

बोद्धव्यवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'ओण्णिद्दं' इति पद्येन अस्य छाया—'औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम्। मम मन्दभागि-न्याः कृते सखि त्वामपि अहह परिभवति॥' इति। कृतस्वकामुकसम्भोगां दूतीं प्रत्युपभोगचिह्नैस्तं सम्भोगं ज्ञातवत्या नायिकाया उक्तिरियम्। अत्र दूतीं बोद्धव्या। तस्या अन्यदपि दृष्टदुष्टचेष्टायाः वैशिष्ट्येन तस्याः कामुकोपभोगो व्यज्यते।

काकुवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'तथाभूताम्०' इति वेणीसंहार-नाटकस्थपद्येन। तत्र प्रथमाङ्के कुरुनिग्रहाद्यनुद्यमेन युधिष्ठिरमुपालभमानं भीमं प्रति सहदेवस्य 'आर्य, कदाचित् खिद्यते गुरुः' इत्युपालम्भनिषेधपरवाक्यस्योत्तरे 'गुरुः किं खेदमपि जानाति' इत्युपक्रम्य भीमसेनोक्तिरियम्। 'खिन्ने' इत्यस्येत्थ-मित्यादिः गुरुः साक्षादनभियोज्यो युधिष्ठिरः! इत्थममुना कारणेन खिन्ने म्लाने मयि खेदं मात्सर्यं न भजति अद्यापि एवंविधदुरवस्थायामपि अथवा प्रत्यपकारक्ष-मकालेऽपि कुरुषु खेदं मात्सर्यं न भजतीति सोपहासः काक्वा प्रकाश्यते। अत्र 'ननि' काकुः। तद्वैशिष्ट्यात् 'मयि न योग्यं मात्सर्यं, कुरुषु तु योग्यम्' इति

व्यज्यते । ननु पात्रापात्रवैपरीत्येन खेदस्य करणाकरणरूपवाक्यार्थस्य अयुक्ततयाऽपर्यवसन्नस्य पर्यवसानरूपसिद्धौ व्यङ्ग्योपस्थापनद्वारा काकुरेव प्रभवतीति काकोर्वाच्यसिद्धयङ्गत्वे तद्द्वारीभूतस्यापि व्यङ्ग्यस्यापि तथात्वेन गुणीभूततया गुणीभूतव्यङ्ग्यमिदमुदाहरणं न तु ध्वनिरित्याशङ्क्य निराकरोति—'न च वाच्यसिद्धयङ्गमत्र' इत्यादिना वृत्तौ । अत्र नेति प्रश्नकाकाऽपि वाक्यार्थप्रतीतिपर्यवसानात्, यां काकुं विना वाक्यार्थबोध एव नोपपद्येत तयैवाक्षिप्तस्य गुणीभावात् । यथा 'मथ्नामि कौरवशतम्' इत्यत्र भीमसेनादितादृशवक्तरि । तदेतदुक्तं 'प्रश्नमात्रेणापि काकोर्विश्रान्तेरि'ति ।

वाक्यवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'तइया मह' इति प्राकृतपद्येन तस्य छाया—'तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र । इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः' इति । नायिकामयान्निकटवर्तिनीमन्यां प्रियतमां साक्षादपहाय नायिकाकपोलगतं तत्प्रतिबिम्बं नायिकामुखावलोकनमिषेण सादरं दृष्ट्वा तत्प्रतिबिम्बापगमे तादृशनिरीक्षणनिवृत्तं नायकं प्रति दृष्टिविकारेण ज्ञातरहस्याया नायिकाया उक्तिरियम् । तथा च वाक्यमनेकं पदम् । तेनात्र तदेदानीं पदात्मकवाक्यवैशिष्ट्यात् 'मत्सखीं कपोलबिम्बितां पश्यतस्ते दृष्टिरन्यादृशा, चलितायां तु तस्यामन्यादृशीत्यहो प्रच्छन्नकामुकत्वं तवे'ति व्यज्यते ।

वाच्यवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'उद्देशोऽयं सरस०' इति पद्यम् । अत्र नर्मदोद्देशरूपस्य तद्विशेषणीभूतवातकुञ्जादिरूपस्य च वाच्यस्य यथोक्तविशेषणस्य वैशिष्ट्यात् 'सुरतार्थं प्रविशे'ति व्यज्यते ।

अन्यसन्निधिवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'णोल्लइ अणो०' इति प्राकृतं पद्यम् । अस्य छाया—'नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले । क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः' इति । गुरुजनसान्निध्येन विशिष्य वक्तुमशक्नुवन्ती काचित् तटस्थयेव सन्निहितमुपनायकं प्रति सङ्केतकालसूचनाय प्रतिवेशिनीं सम्बोध्य श्वश्रूपालम्भमाह । अन्यसन्निधिः सन्निहितोऽन्यः तेनाह प्रतिवेशिनीं प्रति प्रवर्तिते वाक्ये प्रच्छन्नपुरुषरूपस्य सन्निधेर्वैशिष्ट्यात् सन्निहितं प्रति सन्ध्यासङ्केतसमय इति व्यज्यते ।

प्रकरणरूपप्रस्ताववैशिष्ट्याद् वाच्यस्य व्यञ्जकत्वमुदाहरति—'सुव्वइ समागमिस्सदि' इति प्राकृतं पद्यम् । छाया—'श्रूयते समागमिष्यति तव प्रियोऽद्य

प्रहरमात्रेण। एवमेव किमिति तिष्ठसि तत्सखि सजय करणीयम्' इति। उपपतिं प्रत्युपसर्तुं प्रस्थितां नायिकां प्रति प्रियप्रत्यागमनवार्तां श्रुतवत्यास्तत्सख्या जनान्तर-सन्निधानेऽभिसरणनिवारणोक्तिरियम्। अत्र प्रकरणस्य प्रस्तावस्याभिसारसम्बन्धि-त्वरूपवैशिष्ट्यादुपपतिं प्रत्यभिसर्तुं न योग्यमिति व्यज्यते।

देशवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'अन्यत्र यूयं कुसुमाव०' इति पद्येन सखीवेषधारिणा स्वोपनायकेन सहागतां प्रियसखीं दृष्ट्वा सखीं प्रति नायिकाया उक्तिरियम्। अत्र देशस्यातिविविक्ततादिरूपवैशिष्ट्याद् वक्तृवैशिष्ट्या-दिसहितात्सख्या 'प्रच्छन्नकामुको युष्माभिः प्रहेयः' इति प्रियसखीं प्रतिव्यज्यते। अत्र कुसुमावचयमुद्दिश्यान्यदेशाधिकरणकत्वस्य विधेयत्वेन प्राधान्याद् देशवैलक्षण्या-देव व्यञ्जकत्वम्। 'उद्देशोऽयम्' इत्युदाहरणे तु देशस्य विशेषत्वेनाप्राधान्यात्प्रधा-नीभूतवाच्यस्यैव व्यञ्जनत्वमिति भेदः।

कालवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—'गुरुअणपरवस०' इति प्राकृत-पद्यमस्य छाया-'गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिनी अहकम्। अद्य प्रवासं व्रज स्वयमेव श्रोष्यसि करणीयम्' इति। अत्र 'अद्य' पदप्रतिपाद्यमधुसमय-वैशिष्ट्याद् वक्तुरवस्थाविशेषसहितोदितादिदानीं यदि व्रजसि तदा अहं तावन्न जीवामि, तव तु न जानामि गतिमिति प्रियं प्रत्यनुरक्तया व्यज्यते।

आदिग्रहणाच्चेष्टालीलादेः। अत्र चेष्टा यथा—(चेष्टावैशिष्ट्याद्वाच्यस्य व्यञ्ज-कत्वम्) 'द्वारोपान्तनिरन्तरे०' इति पद्यम्। स्वगोचरचेष्टाविशेषेण नायिकायाः स्वविषयकभावमवधारितवतो नायकस्य सखायं प्रत्युक्तिरियम्। अत्रोरुसमासङ्गादि चेष्टावैशिष्ट्यात् प्रच्छन्नकामुकविषय आकूतविशेषो ध्वन्यते। तत्र प्रथमार्धेन स्पष्ट-कमालिङ्गनम्। शिरोंऽशुकं पुरत आनीतमित्यनेन गूढमागच्छेरिति, अधः क्षिप्ते चले लोचने वाचस्तन्न निवारितं प्रसरणमित्येताभ्यां सूर्यास्तसमये कोलाहल-रहिते काले समागन्तव्यमिति सङ्कोचिते इत्यनेन पारितोषिकमालिङ्गनं करो-मीति व्यज्यते। यद्यप्येकत्रैवोदाहरणे भेदान्तराण्यपि सन्तीति तदेवोदाहरणान्तरं सम्भवति, तथापि निःसन्देहव्युत्पत्तये प्राप्तावसरतया पुनः पुनरुदाह्रियते। वक्तृबोद्धव्यादीनां प्रत्येकमेव न व्यञ्जकत्वं, किन्तु मिलितानामपीति द्रष्टव्यम्। तत्र द्वयोर्व्यञ्जकत्वं यथा—'अत्ता एत्थ०' इति प्राकृतपद्यम्। छाया 'श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय। मा पथिक रात्र्यन्ध शय्यायामावयोर्निम-

ङ्क्ष्यसि; इति। अत्र गृहे श्वश्रूरहं च। श्वश्रूश्च जरत्तरत्वेन बधिरा, निष्पन्दा च। जनान्तरसञ्चारस्तु नास्त्येव। अतो यथेष्टं मम शय्यायामेव स्वपीहीति व्यङ्ग्यं व्यभिचारिणोर्वक्तृबोद्धव्योर्वैशिष्ट्यात् प्रतिभाजुषां प्रतीयते। एवं त्रिकादि-भेदाः स्वयमवगन्तव्याः।

ननु अर्थमात्रव्यञ्जकत्वे शब्दार्थयुगलरूपकाव्यस्य व्यञ्जकत्वं न सिद्धमित्यत आह—

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता॥

इति शब्दरूपप्रमाणेन वेद्यः प्रतिपादितोऽर्थः वाच्यलक्ष्यव्यङ्ग्यरूपः अर्थान्तरं व्यङ्ग्यलक्षणं व्यनक्ति प्रकाशयति तत् तस्मात्कारणात् अर्थस्य व्यञ्जकत्वे शब्दस्य सहकारिता विशेषणीभावः इति सूत्रार्थः।

**प्र० २—अत्र तृतीयोल्लासे 'तथाभूतां दृष्ट्वा०' इत्युदाहरणे वृत्तावुक्तम्–'अत्र मयि न योग्यः खेदः कुरुषु तु योग्यः इति काका प्रकाश्यते' इति। तत्र क आशयो ग्रन्थकृतः ससमीचीनतया प्रतिपाद्यताम्।**

उ० २—अत्र 'गुरुः खेदं मयि भजति नाद्यापि कुरुष्वि'ति काकोर्वैशिष्ट्यान्मयि योग्यः, कुरुषु पुनर्योग्यं मात्सर्यमिति व्यज्यते। नन्वत्रोक्तेन काकुव्यङ्ग्येन वाच्यस्य सिद्धिः शोभनत्वनिष्पत्तिः क्रियते। तथा चापराङ्गतया व्यङ्ग्यं गुणीभूतम्। अतो न ध्वन्यङ्गं काकुरिति, चेत् न, उक्तव्यङ्ग्यस्य क्रोधप्रकर्षपर्यवसन्नतया वाच्यस्यैव तदङ्गत्वात् (ध्वन्यङ्गत्वात्)। न तु काकोर्वाच्यसिद्ध्यङ्गत्वम्, यथोक्तं झलकीकरमहाशयैः स्वीये व्याख्याने यथा—'अत्र काकोर्वाच्यसिद्ध्यङ्गत्वं न व्यङ्ग्यार्थाक्षेपद्वारा अपि तु न भजति इति प्रश्नमात्रोपस्थापनद्वारैव। तेन हि वाच्यार्थे पर्यवसन्ने सति व्यङ्ग्यप्रतीतिरिति कुतो गुणीभूतव्यङ्ग्यत्वशङ्का?' इति। तदेतदुक्तम् न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यं शङ्क्यम्, इति। तथापि काक्वाक्षिप्तव्यङ्ग्यगुणीभूतव्यङ्ग्ययोः प्रभेदता कथमपनेया इति चेत्, न। अत्र नेति प्रश्नकाक्वाऽपि कुरुषु पुनर्योग्यं मात्सर्यं इति वाक्यार्थप्रतीतिपर्यवसानात् यां काकुं विना वाक्यार्थबोध एव नोपपद्यते तथैवाक्षिप्तस्य गुणीभावात्,

यथा 'मथ्नामि कौरवशतम्' इत्यादौ भीमसेनादौ तादृशे वक्तरि। तदेतदुक्तम्। प्रश्नमात्रेणापि काकोर्विश्रान्तेरिति। अत्रान्ये एवं कथयन्ति—कुरुषु न भजति इति नञ्काकुः किमर्था ततः प्रश्नरूपः किमर्थं एवेहाक्षिप्त इति तस्यैव गुणीभावो न्याय्यः, न तु क्रमणोऽपि काका व्यङ्ग्यो गुणीभूतो भवति। अत एव गुणीभूतविभागे काकाक्षिप्तमिति आहुः।

इति तृतीयोल्लासः समाप्तः।



# अथ चतुर्थोल्लासः

प्र० १—लक्षणामूलव्यङ्ग्यध्वनेरभिधामूलव्यङ्ग्यध्वनेश्च स्वरूपं सोपपत्तिकं निरूप्य तयोर्भेदानपि सोदाहरणं प्रतिपादयत।

उ० १—अत्र काव्यप्रकाशे द्वितीयतृतीयोल्लासयोः शब्दार्थनिर्णयः प्रतिपादितः। 'तददोषौ०' इति काव्यलक्षणे निरूपितौ शब्दार्थौ निरूप्य दोषगुणालङ्काराणां स्वरूपमभिधानीयं क्रमप्राप्तमिति कृत्वा दोषाः हि अपकर्षजनकाः—गुणाश्चोत्कर्षहेतवः तथा अलङ्काराश्चोपकारका इति तेषां निरधिकरणस्य सम्भवात् कस्मिन्नधिकरणे एते उत्कर्षं जनयन्ति इत्यादि जिज्ञासा जायत एव। अत आश्रयत्वेन धर्मिणः प्राधान्यम्। अत एवाहुः। उद्देश्यतावच्छेदकरूपेणोद्देश्ये ज्ञाते सति एव किञ्चिद्विधातुं निषेद्धुं वा शक्यते इति तस्मात् काव्यस्वरूपमनिरूप्य धर्मितावच्छेदकरूपेण धर्मिणमसंसाध्य तद्गता धर्मा विधातुं न शक्यन्त इत्युपजीव्यत्वाद् ध्वनिरूपकाव्यस्वरूपं निरूप्यते। अविवक्षितवाच्यो यस्येति। अत्र सामान्यरूपेणाज्ञातस्य विभागो न सम्भवति। विभागो नाम स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यपरस्परासमानाधिकरणयावद्धर्मप्रकारज्ञानानुकूलो व्यापारः। यावत्पर्यन्तं पदार्थतावच्छेदकं न ज्ञायते तावत्पर्यन्तं तद्व्याप्यधर्मज्ञानं न जायते इति पदार्थतावच्छेदकज्ञानं पूर्वमपेक्षितम्। अतश्च ध्वनिपदार्थतावच्छेदकस्याज्ञाने तद्द्वैविध्यविभागकथनमसङ्गतिमिति तदाह—यत्र ध्वनाविति। यद्यपि पूर्वं ध्वनिलक्षण न कृतं परन्तु यत्पदघटितवाक्येन ध्वनेरुद्देश्यत्वबोधनादुद्देश्यतावच्छेदकरूपेणाऽज्ञाते सति तस्योद्देश्यता न सम्भवत्यनुवादसामर्थ्यादेव यत्र वाच्यमविवक्षितं प्रधानकवितात्पर्याविषयीभूतं तद्ध्वनिरिति कल्पनीयमिति भावः।

लक्षणायां तात्पर्यानुपपत्तिः अन्वयानुपपत्तिरिति बीजद्वयम्। तत्र तात्पर्यानुपपत्तौ सत्यामर्थान्तरसङ्क्रमितवाच्यो ध्वनिः। 'त्वामस्मि वच्मी'ति श्लोके नान्वयानुपपत्तिः किन्तु यथा कथनस्यानुपयोगमात्रम्। अतस्तत्र वचनत्वेन सामान्येन वचनविशेष्यस्य उपदेशस्य प्रतीतिरिति वाच्यार्थः। अर्थान्तरे स्वविशेषे सङ्क्रमितः। अन्वयानुपपत्तिमूलस्थले तु 'उपकृत'मित्यादौ उपकारादिर्वाच्योऽर्थः अत्यन्तं तिरस्कृतो नाम बाधितः। अतो वाच्यार्थादन्यदेवापकारादिकं लक्षयतीति सोऽत्यन्ततिरस्कृतवाच्यो ध्वनिः। अत एवात्र जहल्लक्षणा। पूर्वत्र तु अजहल्लक्षणा।

अभिधामूलव्यङ्ग्यप्राधान्ये 'शून्यं वासगृहमि'त्यादौ वाक्यार्थप्रतीतेः रसप्रतीतिं प्रति कारणत्वात् तत्रान्वयानुपपत्तितात्पर्यानुपपत्ती न स्तः। अपि तु तत्र तात्पर्ये सत्यपि तावन्मात्रे तात्पर्यविश्रामाभावात् तद्गतेन व्यञ्जनाव्यापारेण रसादिरपि प्रत्याय्यत इति विवक्षितान्यपरवाच्यो नाम ध्वनिः स चासंलक्ष्यक्रमव्यङ्ग्यः लक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः। आद्यो रसादिः। यतस्तत्र 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति सूत्रानुसारेण संयोगस्य रसं प्रति हेतुत्वप्रतीत्या हेतोश्च पूर्वभावित्वनियमेन क्रमोऽस्त्येव। परं सामाजिकैर्वाक्यार्थप्रतीत्यात्मकत्वेनैव रसादिप्रतीतेरनुभवात्क्रमो न प्रतीयते। उत्तरत्र तु अनुरणनन्यायेन 'उवणिच्चले'-त्यादौ निष्पन्दत्वेनाश्वस्तत्वम्। इत्यादिक्रमेणैव प्रतीयत इति संलक्ष्यक्रमव्यङ्ग्यध्वनिः। यत्र 'कैलासालये'त्यादिश्लोके 'पश्येत्कश्चिदि'ति श्लोके च शृङ्गारः भावशबलता वा प्रतीयते सा च 'सदा त्रायता'मिति 'त्वद्द्विषोऽरण्यवृत्ते'रिति च पदोपस्थापितपार्वतीराजादिविषयकरत्यादिकमुपकरोतीति उपकारकलक्षणमलङ्कारत्वं तेषां तच्च गुणीभूतव्यंग्याभिधाने वक्ष्यते। 'शून्यं वासगृहमि'त्यादिश्लोके 'क्वाकार्यमि'ति श्लोके च शृंगारः भावशबलता वा प्राधान्येन प्रतीयते न तु तदपेक्षयापि श्लोकप्रतिपाद्यं प्रधानं किञ्चदस्ति अतः स एव सर्वैरुपक्रियते नत्वन्यमुपकरोतीति सोऽलकार्यः।

प्र० २—रसलक्षणनिरूपणाय व्याख्यायेतामिमे कारिके—

> कारणान्यथ कार्याणि सहकारीणि यानि च।
> रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
> विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।
> व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।

उ० २—तत्रानादिसंसारसम्बन्धानुभूतनानाभावानां प्रत्यात्मसंस्काररूपतया स्थितिर्वर्तते सत्सु चैतेषु भावेषु कारणकलापसमवधाने तेषामुद्बोधो भवति। अत एव ते स्थायिन उच्यन्ते। यद्वा काव्य आप्रबन्धसमाप्तिः अविच्छेदेनेतररसविरुद्धाविरुद्धभावैरतिरस्कृतत्वेन च वर्तमानतया ते तथोच्यन्ते। यदाहुः—

> अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।
> आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः॥

तेषाञ्च स्थायिनां यमालम्ब्योद्गमो भवति यैश्च ते उद्दीप्यन्ते ते लोके

कारणपदव्यवहार्याः काव्ये विभावयन्तीति व्युत्पत्त्याऽऽलम्बनोद्दीपनरूपा विभावा उच्यन्ते । तत्र नायिकादिरालम्बनविभावः । उद्यानादिकमुद्दीपनविभावाः । तत्कार्यभूताश्चानुभावाः । अनुभावयन्ति स्वगतान् रत्यादीन् परात्मस्वापादयन्तीत्यनुभावाः अथवा अनु भावरत्यादेः पश्चाद्भवन्तीत्यनुभावाः एतेन तेषां कार्यत्वमुक्तं भवति । व्यभिचारिणः सहकारिकारणानि । यदुक्तम्—'विशेषाभिमुख्येन चरन्तो व्यभिचारिणः' इति । विशेषाद्रत्यादेरुद्रेकात् नहि रत्युत्पत्तिमात्रेण चित्तोन्मादादीनामवसरः । आभिमुख्येनानुकूल्येन । एतैश्च विभावानुभावव्यभिचारिभिर्मिलितैर्व्यक्त आस्वादयोग्यतामापादितो रत्यादी रसः । व्याख्यातमन्यत् ।

**प्र० ३—काव्यप्रकाशोक्तरसवादप्रपञ्चस्तेनैवोक्तदिशा व्याख्याय तेषां हेयोपादेयते अपि सविस्तरं प्रतिपादयत ।**

उ० ३—अत्रेदं विवृण्वत इति । भट्टलोल्लटप्रभृतयः इति सम्बन्धः । 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति भरतसूत्रे हेतौ पञ्चमी । हेतुत्वञ्च कारकत्वं ज्ञापकत्वं वा । ज्ञापकत्वेऽपि तद्विषयकानुमितिजनकज्ञानविषयत्वं वा तद्विषयकप्रत्यक्षजनकज्ञानविषयत्वं वा, तद्विषयकशाब्दजनकज्ञानविषयत्वं वा । तत्र कारकत्वमतानुयायिनो भट्टलोल्लटप्रभृतयः । तेषामयमाशयः—

रत्यादयो हि न समवायेन नटे सामाजिके वा सम्भवन्ति । तदानीं तयोस्तदुत्पादकसामग्र्यभावात् । शिक्षाभ्यासादिमात्रेण रामादिरूपतां दर्शयतो नटस्य रत्युत्पादकसामग्र्या लेशोऽपि न शक्यते वक्तुम् । सामाजिकेऽपि सीतादिगतपूज्यत्वबुद्धेर्जागरूकतया प्रत्युत वैरस्यप्रसङ्गः । अतः सीतादिदर्शनेन तत्कार्यभूतेन भ्रूविक्षेपादिनाऽनुभावेन सहकारिणा चौत्सुक्यादिनाऽनुकार्ये रामादावेव रतिरुत्पद्यते । सैव चरति निरतिशयसुखास्वादरूपो रसो नाम । नटे तु न तस्य वास्तविकी स्थितिः । किन्तु तस्य तद्रूपेण रूपितत्वादत्यन्तं सदृशयोस्तयोर्भेदस्याप्रतीते सा भ्रमरूपैव । कथमन्यदीयसुखकारणैरन्यस्य रसोत्पत्तिः स्यादिति ।

ततश्च सूत्रे कारकहेतुत्वम् तन्मते विवक्षितम् । निष्पत्तिः उत्पत्तिः । एतदेवाह—वृत्तौ विभावैरित्यादिना । तत्र वासनारूपतया सूक्ष्मतया वर्तमानान् स्थायिनो रत्यादीन् विभावयन्ति आस्वादाङ्कुरयोग्यतां नयन्ति इति व्युत्पत्त्याऽऽल-

म्बनोद्दीपनभेदेन द्विविधो ललनोद्यानादिर्विभावः। तथाविधांस्ताननुभावयन्ति इत्यनुभावाः कटाक्षादयः। प्रभृतिपदात्।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥

इति सात्त्विकानां सङ्ग्रहः। तथाविधांश्च रत्यादीन् विशेषेण चारयन्तीति व्यभिचारिणो निर्वेदादयः। यदाहुः—'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः" इति।

अत्राहुः—अनुकार्ये रामादौ रसोत्पत्त्यङ्गीकारे कथं सामाजिकेषु रसोद्बोधः? कथञ्च तेषां नाट्यादौ प्रवृत्तिः? न च रामादिशृङ्गारदर्शनेनैव सामाजिकानां रसोद्बोधः इति वक्तुं युक्तम्। लौकिकशृङ्गारादिवत्तस्य चमत्काराहेतुत्वात्। किञ्च रामादिगतस्तैरेव रसत्वे रसस्यानन्दात्मकत्वात्तद्गतक्रोधभीत्यादेरपि सुखत्वं वाच्यम्। तच्चैतदनुभवविरुद्धम्। नहि लौकिकदुःखकारणैः सुखोत्पत्तिः क्वचिदपि परिदृश्यते। अतो पूर्वोक्तलक्षणो रसः। नापि सूत्रे कारकहेतुत्वमर्थः किन्तु विभावादिभिरुक्तरूपैः संयोगादनुमाप्यानुमापकभावसम्बन्धात् रसस्य निष्पत्तिरनुमितिरिति सूत्रस्यार्थः इति श्रीशङ्कुकादीनां द्वितीयं मतं तदाह— 'राम' इत्यादिना।

अस्य ह्यर्थः। प्रथमं नटे लोकप्रतीतिभ्यो विलक्षणतया रामोऽयमिति प्रतिपद्यते। तथा गृहीते च तस्मिन्पक्षे भ्रूविक्षेपादिकार्यकारित्वेन हेतुना 'सीताविषयकरतिमान् भ्रूविक्षेपादिकारित्वात्' इति रतिमत्त्वं भूयो गृहीतव्याप्तिकैः सामाजिकैरनुमीयते। ननु नटे भ्रूविक्षेपादीनां कृत्रिमत्वात् कथं तैरनुमितिरिति चेन्न। अभ्यासपाटववशेन रोमाञ्चोत्कण्ठादीनामभिनयाद्वस्तुतः। कृत्रिमैरपि भावनामहिम्ना तथाऽप्रतीयमानैस्तैरालम्बनोद्दीपनकारणैः स्थायिनो रत्यादेरनुमानस्य सुवचत्वात्। सैवानुमितिः सामाजिकैः क्रियमाणो रसः। तत्र नटे रामोऽयमिति प्रतिपत्तेर्लोकस्य वैलक्षण्यं प्रदर्शयति। राम एवेति। इदं तावत् निश्चयात्मकज्ञानम्। तत्र राम एवायमित्यत्राऽयोगव्यवच्छेदः। अयमेव रामः इत्यत्रान्ययोगव्यवच्छेदः सूचितः। मिथ्याज्ञानमाहार्यज्ञानम्। तच्च न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमित्यनेनोक्तम्। बाधकालीनमिच्छाजन्यं ज्ञानमाहार्यम्। रामः स्यात् वा न वाऽयमिति संशयः। रामसदृशोऽयमिति सादृश्यधीः। एभ्यो

विलक्षणा नटे रामोऽयमिति प्रतिपत्तिः। सा च नटे रामत्वबाधग्रहेऽपि राम-सदृशाकारेण चित्रगतेऽश्वेऽश्वाकृतिमत्त्वेनाश्व इतिवद्भवतीति। दृष्टस्य जातिबोधे आकृतिप्रकारो बोधः। यथा पिष्टकमय्यो गावः क्रियन्तामित्यादौ जात्याकृतिव्यक्तयः पदार्था इति तस्य पदार्थत्वाङ्गीकारात्।

अत्राहुर्भट्टनायकादयः। नटस्य हि नटत्वेन ज्ञाने तत्र सीताविषयकरतिर्बाधिता, चित्रतुरगन्यायेन रामत्वेन गृहीतेऽपि रामः सीताविषयकरतिमान् इत्यनुमित्या सामाजिकानां कथं रसोद्बोधः तत्र तेषामुदासीनत्वात्। स्वात्मनि रतिमत्वज्ञाने च सभ्यानां व्रीडातङ्कादिप्रसङ्गः केन वार्येत। एवञ्च पक्षोऽप्रत्यक्षः। न च पक्षं विनाऽनुमितिर्वक्तुं शक्यते। अनुमित्यसम्भवे च कुतो रसास्वादार्थिनां सामाजिकानां तत्र प्रवृत्तिः स्यात्। किञ्च चमत्कारहेतुर्नानुमितिरित्यनुभवविरोधश्च। तथा सति कथं रसं साक्षात्करोमि इत्यनुव्यवसायः स्यात्। तस्मान्न पूर्वोक्तं सम्यक्। अपि तु विभावादिभिः संयोगाद्भोज्यभोजकभावरूपाद्रसस्य निष्पत्तिर्भोग इति सूत्रार्थः। ननु कथमन्यगतैर्विभावादिभिरन्यगत एव स्थायी अन्येन भोक्तव्य इति चेदाशङ्क्यते तत्र वदामः—इह खलु काव्यस्य शब्दात्मकस्य त्रयो व्यापाराः—अभिधा, भावकत्वं, भोजकत्वं चेति। तत्राभिधा—तत्तत्पदार्थोपस्थिति-प्रयोजिका। भावकत्वं साधारणीकरणापरपर्यायम्। तेन व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते। अर्थात् कामिनीत्वादिसामान्येनोपस्थाप्यन्ते। ततश्च भावनावशेन स्वगतपरगतांशत्वयोर्भेदाद्रतित्वमात्रपुरस्कारेण बोधो भवति, तैश्च साधारणीकृतविभावादिभिस्तथाकृत एव स्थायी भुज्यते। भोगश्चानन्दात्मको रसपदव्यवहार्यः। एवञ्च प्रत्यक्ष एव रसः। न च शब्दान्वयव्यतिरेकानु-विधायितया तत्र शब्दत्वमपीति वाच्यम्। सङ्करप्रसङ्गात्। शाब्दत्वप्रत्यक्षयोर्युग-पदनवस्थानात्।

एतदेवाह—न ताटस्थ्येनेति। तटस्थ उदासीनो नटो रामादिर्वा। नटगतत्वे बाधो, रामादिगतत्वे सभ्यानामौदासीन्यम्। तृतीयमपि निरस्यति नात्मगतेनेति। रसो न प्रतीयते नानुमितिविषयीक्रियते तथा सति सामाजिकानां व्रीडातङ्कादि-प्रसङ्गात्। किञ्चानुमितिरपि न सम्भवतीति प्राक् प्रतिपादितम्। नोत्पद्यते विभा-वादीनामवास्तवत्वात्। रसस्य च समूहालम्बनत्वात्। नाभिव्यज्यते न व्यञ्जन-योपस्थाप्यते। रसस्य पूर्वमसिद्धत्वात्। सिद्धस्यैव तत्सम्भवादिति भावः। अपि तु काव्ये नाट्ये चाभिधातो (लक्षणातोऽपि) अन्येन भावकत्वनाम्ना साधारणी-

करणेनालौकिकव्यापारेण भाव्यमानः साधारणीक्रियमाणः सत्त्वोद्रेकेति सत्त्वस्योद्रेकेण रजस्तमसी अभिभूयाविर्भावेन प्रकाश्यमानो य आनन्दः तदात्मिकैव संवित् ज्ञानं तस्य विश्रान्तिर्वेद्यान्तरसम्पर्कशून्यतयाऽवस्थानं तत्सत्त्वेन स्वरूपेण भोगेन भोजकत्वव्यापारेणेति ।

अभिनवगुप्तपादादीनां मते सर्वं भट्टनायकवदेव । विशेषस्तु 'दशमस्त्वमसी'त्यादौ एकत्रैव शाब्दप्रत्यक्षयोर्दृष्टतया शब्दान्वयव्यतिरेकानुविधानस्यैव च शाब्दत्वप्रयोजकत्वेन, तस्य च श्रव्ये वर्तमानतया अभिधादेश्च विरतत्वेन तत्र व्यङ्ग्यत्वमिति । नापि तन्मते भावकत्वभोजकत्वाख्यं व्यापारद्वयं कल्प्यते प्रमाणाभावात् । मुक्तेर्ज्ञानातिरिक्तत्वस्यानुभवविरुद्धत्वात् । इति तदेतद्विवृण्वते लोके इति प्रमदादिभिः प्रमदोद्यानकटाक्षोत्कण्ठादिभिरालम्बनोद्दीपनकारणकार्यसहकारिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासपाटववतां सामाजिकानामित्यग्रिमेणान्वयः । अत एव सवासनानामेव रसास्वादो नेतरेषामरसिकानामित्युक्तं भवति । यदाहुः—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः ॥ इति ।

काव्य उक्तरूपे नाट्ये 'आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा' इत्युक्तचतुर्विधाभिनयात्मके दृश्यकाव्ये तैरेव प्रमदादिभिरेव कारणत्वादिपरिहारेण लौकिककारणत्वकार्यत्वसहकारित्वव्यपदेशपरित्यागेन विभावनादिव्यापारवत्त्वात् आदिपदादनुभावसञ्चारिणौ । ननु तथापि कथमन्यनिष्ठैर्विभावादिभिरन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिरित्यत आह—ममैवैते—इत्यादि स्वगतत्वपरगतत्वांशयोर्मोक्षात् साधारण्येन प्रतीतैस्तैः स्थाय्यभिव्यक्तौ बाधकाभावादिति भावः । अत एव च बीभत्सादिभ्यः सुखमेव सञ्जायत इत्यत्र न विरोधः । असाधारणीकृतैस्तैः सुखोत्पत्तेर्दुर्वचत्वात् । तत्कालविगलितेति—तत्काले रसास्वादकाले विगलितोऽगृहीतो यः परिमितप्रमातृभावः ममैवैते अहमेव रसास्वादयिता इत्येवंरूपेणानुभूयमानो यो व्यक्तिविशेषसम्बन्धः तद्वशेनोन्मिषितो वेद्यान्तरसम्पर्कशून्योपरिमितभावो यस्य तेन प्रमात्रा सामाजिकेन सकलसहृदयसंवादभाजा प्रमातृविशेषसम्बन्धित्व तत्समवेतत्वाग्रहरूपेण साधारण्येन ( साधारणीकरणव्यापारेण ) स्थायी चर्व्यते 'विभावादिजीवितावधिरि'त्यनेन चर्वणाया अनित्यत्वमुक्तम् । पुर इव प्रविशन् इत्यादि रसस्तवः । शेषं स्पष्टम् ।

प्र० ४—काव्यप्रकाशकृदुक्तरसप्रपञ्चनिष्कर्षतो रसस्वरूपं कथं निर्धारितं भवतीति सामान्यरूपेण सविस्तरं प्रतिपादयत।

उ० ४—अथ रसस्वरूपमाह 'कारणान्यथ कार्याणी'ति कारिकाद्वयेन। स्थायिनः स्थितिशीलस्य रत्यादिसंस्कारस्येति यावत्। रत्यादीनां हि ज्ञानरूपत्वात् तृतीयक्षण एव नाशात् स्थितिशीलत्वं न सम्भवति इति रत्याद्यनुभवजनितः संस्कार एव स्थायिपदेनोच्यते इति स्वशास्त्रसङ्केतः। यद्यपि संस्कारे कारणमनुभव एव तथाप्यत्र संस्कारोद्बोधे कारणमिति ज्ञेयम्। विशेषेण भावयन्ति संस्काररूपेण स्थितं रत्यादिकं रतित्वादिनाऽनुभवगोचरतामापादयन्ति इति विभावाः नायिकादर्शनात्पूर्वं व्याघ्रदर्शनात् पूर्वं वा अनादौ संसारे अनादीनां जीवानां पूर्वपूर्वजन्मसु कदाचित्कदाचिन्नायिकाव्याघ्रादिदर्शनजनितरतिभीत्यादिसंस्काराणां वर्तमानत्वेऽपि इदानीं नायिकादर्शनं विनाऽहं रतिमान् इति संस्कारमुत्पादयन्ती विभावा उच्यन्ते। तत्र समवायसम्बन्धेन रत्याद्युद्बोधं प्रति यद्विषयकं ज्ञानं कारणं स आलम्बनविभाव इत्युच्यते। समूहालम्बनं ज्ञानमित्यादौ विषयस्यालम्बनपदेन प्रसिद्धेः। उद्बुद्धस्य रत्यादेश्चिरकालवृत्तित्वसम्पादक उद्दीपनविभाव इत्युच्यते। न हि नायिकादर्शनमात्रेणोद्बुद्धाऽपि रतिः पुण्यक्षेत्रे पर्वकाले वा चिरं तिष्ठति अपितु उपवनवसन्तादिष्वेव। अतस्त उद्दीपनविभावा उच्यन्ते। यद्यपि नायिकादर्शनेन संस्कारोद्बोधात् तज्जनिताऽपि रतिर्ज्ञानत्वादेव तृतीयक्षणे नश्यति तथापि तादृशरत्यादिपूर्वजनितज्ञानबाधकविजातीयज्ञानानन्तरितपूर्वज्ञानसजातीयज्ञानपरम्पराधारोत्पादनमेवात्र चिरकालवृत्तित्वपदेन बोध्यम्। अनुभावास्तु अनुपश्चाद् भवन्तीति एवं व्युत्पत्त्या कार्यरूपा अनुभावयन्तीति व्युत्पत्त्या 'कार्यात्कारणं गम्यत' इति न्यायेन ते एव परात्मसमवेतां रतिं परैः प्रत्यक्षीकर्तुमयोग्यामनुमापयन्तीति अनुभावाः। व्यभिचारिणस्तु अनियतत्वाद्रतौ सत्यामालम्बनविभावस्य नायिकादेरिवोन्मादादेरनियतत्वादव्यापका व्यभिचारिण इत्युच्यन्ते। अथवा रत्यादीनां विशेषादाधिक्यादाभिमुख्येन चरन्ति रत्यानुकूल्येनैवोत्पद्यन्ते इति व्युत्पत्तिद्वयेन तथोच्यन्ते। नहि सर्वदा रतौ सत्यामुन्मादो भवत्येवेति नियमः। आधिक्ये तु कदाचित् भवत्यपि ते जायमाना अपि न रतिं विनाशयन्ति। अपि तु परिपुष्णन्त्येवेति लोकसिद्धम्। तदेवाह—'स्रक्सूत्रवृत्त्या भावानामि'ति तैः विभावाद्यैर्व्यक्तः

व्यञ्जनाव्यापारेण प्रत्यायित: रत्यादि: रसपदवाच्य:। असंलक्ष्यक्रमव्यङ्ग्ये क्रमस्य सत्तायां भरतसूत्रसम्मतिमाह—विभावानुभावेत्यादि। अत्र संयोगादिति हेतौ पञ्चम्या तस्य प्राग्वृत्तित्वं बोधितम्। तेन क्रमोऽस्ति। शैघ्र्यात्तु न प्रतीयते इति भाव:। अत्र सूत्रस्य व्याख्यानचतुष्टयम्। हेतौ पञ्चमी संयोगस्य कारकहेतुत्वमाह। तेन रसनिष्पत्तिरित्यस्य रसोत्पत्तिरित्यर्थ:। अयं च कार्यत्ववाद: भट्टलोल्लटादीनाम्। एतेषां मते अनुकार्ये रामादावेव रस: सीतोपवनोत्सुक्यादिसंयोगस्य राम एव सम्भवात्। सामाजिकानान्तु तदनुकारिनटदर्शनेन रसप्रतीति: भ्रमात्मिकैव। एतन्मते रामसमवेताया रते: सुखात्मकत्वमिव भीत्यादेर्दु:खात्मकत्वमपीति सर्वेषां रसानामानन्दात्मकत्वं न सिद्ध्यति। किञ्च विभावादीनां कारणत्वं हि न समवायिकारणत्वं ज्ञानात्मिकां रतिं प्रति रामस्यैव समवायित्वात्। नापि असमवायिकारणभूतायां रतौ असमवायिकारणासम्भवाच्च। अत: निमित्तकारणत्वमेव वाच्यम्। तथा च तन्नाशेऽपि रस: स्थितिं प्राप्नोति। न हि निमित्तकारणे दण्डादौ विनष्टे घटस्यापि नाश:। अत्र तु विभावादिजीवितावधित्वं वक्ष्यते। किञ्च रामात्मनि समवेताया रतेरेव रसत्वे सामाजिकानां तत्प्रत्यक्षासम्भवात् तदास्वादनार्थं तेषां प्रवृत्तिरपि अनुपपन्ना स्यात्। न ह्यारोपितरत्यादिप्रत्यक्षाय कोऽपि प्रवर्तते इति दृष्टम्। तस्माद्रसकार्यत्ववादो न युक्त:। अपि संयोगादिति ज्ञाप्यत्वहेतौ पञ्चमी। तत्र ज्ञाप्यत्वं तज्जन्यज्ञानविषयत्वम्, तज्जन्यज्ञानमनुमितिरिति श्रीशङ्कुक:। प्रत्यक्षात्मकमिति भट्टनायक:। आद्यमते नर्तकगतो रस: अन्त्ये सामाजिकगत:। निष्पत्तिरित्यस्यानुमितिरिति आद्यमते। भुक्तिरिति चान्त्येऽर्थ:। साक्षात्कार एव च भोगपदेनोच्यते सुखभोग इत्यादौ तथा दर्शनात्। साक्षात्कारत्वेऽपि दशमस्त्वमसीत्यादौ प्रत्यक्षत्वशाब्दत्वयोर्दर्शनात्। इन्द्रियसन्निकर्षादिपदप्रत्यक्षादिसामग्रीद्वयजनिते एकस्मिन्नपि ज्ञाने शाब्दत्वप्रत्यक्षत्वयोरविरोधाज्जातिसाङ्कर्यस्य दोषानाधायकत्वाच्छाब्दत्वप्रत्यक्षत्वयोर्जातित्वानङ्गीकाराद्वा एकत्र ज्ञाने द्वयो: सत्वेऽपि न दोष:। अत्र हि सामाजिकानामात्मन: संयोगादिसामग्र्यां सत्यामेव यथा रसप्रत्यक्षमेवं 'शून्यं वासगृहमि'त्यादिश्लोकार्थज्ञाने सत्येव नान्यथा। अत: प्रत्यक्षकारणस्येव शाब्दबोधकारणस्यापि अन्वयव्यतिरेकौ स्त एव। तत्र शब्देन रसप्रतीतौ जननीयायां न शब्दगत: अभिधाव्यापार:। तस्या वाच्यार्थबोधनमात्रेणैव विरतत्वात्। विरम्य व्यापारा-

भावात् । नापि लक्षणा मुख्यार्थबाधाद्यभावात् । मीमांसकाभिमततात्पर्याख्यवृत्तिस्तु पदार्थयोः संसर्गमात्रबोधनेनोपक्षीणा न रसबोधोपयोगिनी । अतः व्यक्तिर्नाम व्यञ्जनाव्यापारोऽभिनवगुप्तपादादिभिराश्रितः । एवञ्च उत्पत्तिः, अनुमितिः, भुक्तिः व्यक्तिरिति क्रमेण चत्वारो वादाः । तत्रानुमितिपक्षे पक्षतावच्छेदकरूपेण पक्षप्रत्यक्षे सत्येव तस्मिन्हेतुनिश्चयेन साध्यानुमितिर्भवति । अतः पक्षप्रत्यक्षमुपपादयति--राम एवायमित्यादिना । अत्रैतत्कालीने नटे त्रेताकालोत्पन्नरामभेदस्य निश्चितत्वादयं नटः रामान्यो नेति ज्ञानं न सम्भवति । नापि रामो नटान्यो नेति ज्ञानं, नाप्ययं रामो न वेति संशयात्मकं तथा सति पक्षतावच्छेदकरूपेण पक्षप्रत्यक्षाभावादनुमित्यभावप्रसङ्गात् । नापि न रामोऽयमिति सत्यं भेदज्ञानं पूर्वोक्तदोषादेव । अत एव न रामसदृशोऽयमिति ज्ञानम् । नहि पक्षसादृश्यमात्रतानेन अनुमितिर्दृष्टा । अपि तु रामत्वबाधग्रहे सति रामगतावयवसंस्थानदर्शनेनाकृतिप्रकारकं रामोऽयमिति ज्ञानं यथा चित्रतुरगे जातेर्बाधे आकृतिमात्रप्रकारिका प्रतीतिः अत एवाहुः—'जात्याकृतिव्यक्तयः पदार्थाः' इति । एतेन पक्षप्रत्यक्षमुपपादितम् । 'सेयं ममाङ्गे'त्यादिना । तत्र हेतुप्रत्यक्षमुपपादयति । यद्यपि नटः रत्यादिशून्योऽभ्यासमात्रेण तथा प्रदर्शयति एव केवलम् । तथापि सामाजिकास्तद्गतान् हेतून् कृत्रिमत्वेन न जानन्ति । एवञ्च कृत्रिमत्वेनाज्ञातैः रत्यादिकार्यभूतैः विलापहर्षवादादिभिः नटात्मनि रतिरनुमीयते । अनुमीयमाना रतिरेव रसः । यद्यपि नटे रतिमनुमिनोमि इति सामाजिकानामनुव्यवसायो युक्तः, तथापि तस्याः अनुमितेः सुखविशेषजनकत्वादन्यानुमितिवैलक्षण्येन रतिं साक्षात्करोमीत्येवानुव्यवसाय इति श्रीशङ्कुकमतम् ।

रसस्यानुमेयत्वपक्षे—'नटः सीताविषयकरतिमान्' इत्यादिबाधज्ञाने सति न सम्भवति, सर्वे हि सामाजिका नटं शिक्षाभ्यासादिमात्रेण तथा तथाऽनुकुर्वन्तमेव जानन्ति न रतिमत्त्वादिना । किञ्च अन्यात्मगतरत्यनुमानेन सामाजिकानां कथमानन्दः । नहि प्रत्यक्षेण जायमानं फलमनुमानमात्रेण भवति । तथा सति मोदकभोजनाद्यनुमानेनापि तृप्त्यादिप्रसङ्गात् । अतः रसस्य प्रत्यक्षमेव वाच्यम् । तच्चेत्थं, काव्यस्य निरन्तरालोचनेन नाट्यस्य सन्तदर्शनेन सामाजिकानां प्रथमं 'रामः सीताविषयकरतिमान्' इत्यादि विशिष्टवैशिष्ट्यावगाहिज्ञानमेव जायते ।

तस्यैव च निरन्तराभ्यासदशायां सीताविषयत्वरामसमवेतत्वांशप्रमोषो भवति। ज्ञानाभ्यासे हि द्विविधमपि सामर्थ्यमस्ति। पूर्वपूर्वज्ञानविषयेण सहोत्तरज्ञाने अधिकविषयत्वं यथा व्युत्पित्सुदशायां पूर्वमेकैकं पदार्थं मनसिकृत्य पश्चाद्द्वितीयादिपदार्थैः सह तान् चिन्तयन् व्युत्पित्सुः क्रमेण महावाक्यार्थमपि एकक्षणे एव जानाति। पूर्वं विशिष्टवैशिष्ट्यावगाहिज्ञाने सत्यपि तदीयैकांशप्रमोषेण चरमज्ञानदशायामेकपदार्थमात्रम्। भ्रूविक्षेपकटाक्षकारित्वादित्यनुमानाकारो वाच्यः। स च नटो न रतिमान् जानाति। यथा कीटभ्रमरस्थले ब्रह्मसाक्षात्कारे वा प्रथमं कीटो भ्रमरो मामागत्य बक्ष्यतीति जानन्नपि क्रमेणैकैकांशप्रमोषे भ्रमरमात्रं विषयीकुर्वन् स्वयं भ्रमररूपो भवति तथैव ब्रह्मज्ञोऽपि। इत्थञ्च सीताविषयकत्वांशप्रमोषे सति रतित्वेन ज्ञायमाना रतिः स्वात्मनि संस्काररूपेण रतिं विषयीकरोत्येव। अयमेव साधारणीकरणात्मा व्यापारः इत्युच्यते। 'अहं सीताविषयकरतिमानि'त्याकारकज्ञाने उच्यमाने सामाजिकानां व्रीडाऽऽतङ्कादि प्राप्नोति। 'रामः सीताविषयकरतिमाह' इति ज्ञाने तु परात्मसमवेतरत्यादीनाम् प्रत्यक्षतापातः। अतः एवमुच्यते। एतादृशज्ञानोत्पत्तौ च सत्त्वोद्रेको निमित्तम्। ततश्च व्यक्तिविशेषवृत्तित्वव्यक्तिविशेषसमवेतत्वासप्रमोषवती रतित्वेन ज्ञायमाना सत्त्वोद्रेकजनिता रतिर्भीतिर्वेत्येवंरूपा वृत्तिः सत्त्वाधिक्यस्वभावात् सुखमेव जनयति न भयादिकम्। पुत्रमरणादीनां राज्यालाभादीनां वा स्वात्मगतत्वेन प्रतिसन्धीयमानानामेव दुःखादिहेतुत्वं लोके प्रसिद्धम्। अत आत्मसम्बन्धित्वेन ज्ञायमानानामेव तेषां शोकादिहेतुत्वं वाच्यम्। तच्चात्र नास्तीति न कोऽपि दोषः, अयमेव भुक्तिवादः।

**प्र० ५—व्याख्यायतां निम्नोद्धृतपदपङ्क्तिः सोदाहरणं स्पष्टीकृत्य 'यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिस्तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तित्वम्।'**

उ० ५—अत्र ग्रन्थकृता त्रीणि पद्यान्युदाहृत्य केवलविभावात्मिका, केवलानुभावात्मिका तथा केवलकतिपयव्यभिचारिभावात्मिका स्थितिः सम्प्रदर्शिता। केवलविभावात्मिका स्थितिरत्र 'वियदलिमलिन' पद्ये, केवलानुभावानामस्तित्वं

'परिमृदितमृणाली' इति पद्ये, तथौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां व्यभिचारिमात्राणां स्थितत्वं 'दूरादुत्सुकमि'ति पद्ये प्रदर्शितमस्ति। तत्र आद्ये पद्ये 'प्रणतिपरे प्रेयसी'ति कामिनीगतायां रतेरालम्बनविभावस्य 'वियदम्बुगर्भमेघम्' इति मधुकर···दिशां श्री, धरणि···टङ्क इति उद्दीपनविभावानामेव केवलानां स्थितिः साक्षादुल्लिखिता वर्तते। तथा द्वितीये पद्येऽङ्गानां म्लानत्वं, क्रियासु प्रवृत्तिजाड्यं तथा कपोलस्य पाण्डुतापि केवलानुभावानामेवोल्लेखः, तथा च तृतीये पद्ये 'दूरादुत्सुके'त्यादिविशेषणैः क्रमेण व्यञ्जितानामौत्सुक्यलज्जाहर्षकोपासूयाप्रसादानां व्यभिचारिमात्राणामुल्लेखः यद्यपि प्रसादस्य व्यभिचारिभावेषु गणना न गृह्यते, तथापि मनःप्रसादस्य हर्षापरपर्यायतया व्यभिचारिषु योज्यः। तृतीयोदाहरणे यद्यपि प्रेयसीति आलम्बनविभावस्य निर्देशसत्त्वात् तथापि तस्य अतिधर्मानुकूलत्वेन निर्देशासत्त्वादनस्तिप्रायो ज्ञेयम्। विभावानुभावव्यभिचारिभिर्मिलितैरेव तैः स्थायिभावो रसः स्मृतः इत्युक्तं प्राक् तर्हि कथमत्र रसस्योत्पत्तिरिति चेन्नैवम्। पूर्वोक्तेषु त्रिष्वपि पद्येषु विभावानामेव केवलानां प्रथमे, अनुभावमात्राणां द्वितीये, व्यभिचारिमात्राणां च तृतीये असाधारणत्वेऽपि द्वयमन्यदपि तथाऽऽक्षिप्यते एव। असाधारणत्वं नाम मुख्यत्वं, झटित्याख्यापकत्वम् अथ प्राकरणिकनियतावस्थिकत्वं वा ज्ञेयम्। अनैकान्तिकत्वं, व्यभिचारित्वम्। तद्रसनिष्पत्तिहेतुत्वे अनैकान्तिकत्वं नेति नानैकान्तिकत्वम्। अत्रायं भावः। रसस्य समूहालम्बनरूपत्वादेकैकस्मादसाधारणादपि रसव्यक्त्यभावात् मिलितानामेव त्रयाणां व्यञ्जकत्वम्। अतोऽसाधारणेनानीतरद्वयमाक्षिप्यत इति मिलितैस्तदभिव्यक्तिरिति नानैकान्तिकत्वम्।

**प्र० ६—'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः' इति कारिकोक्तरीत्या प्रतिरसस्थायिभावस्य विभावादीनाञ्च स्पष्टतया निर्देशः कार्यः। 'शान्तोऽपि नवमो रसः' इत्यस्याप्यत्र समावेशः कार्यः।**

उ० ६—अत्र 'स्थायीभावो रसः स्मृतः' इति निर्देशात् शृङ्गारस्य रतिरेव स्थायी। कान्ताद्यालम्बनविभावः। स्रक्चन्दनाद्युद्दीपनविभावः कटाक्षाद्यनुभावः। व्रीडादिसञ्चारितः शृङ्गारः इत्थं कोष्ठकरूपेणात्र प्रदर्श्यते—

| रसः | स्थायिभावः | आलम्बन वि० | उद्दीपन वि० | अनुभावाः | सञ्चारीभावाः |
|---|---|---|---|---|---|
| शृङ्गारः | रतिः | कान्तादिः | स्रक्चन्दनादिः | कटाक्षादयः | व्रीडातङ्कादयः |
| हास्यः | हासः | विकृताकृतिः | वैकृतादिः | गल्लफुल्लनादिः | श्रमादिः |
| करुणः | शोकः | मृतादिः | मृतगुणादिः | रोदनादिः | दैन्यादयः |
| रौद्रः | क्रोधः | द्विषद् | द्विषदपकारः | विकत्थनादिः | गर्वादयः |
| वीरः | उत्साहः | द्विषद्विद्वज्जनः | अपकारादिः | प्रतिकारादयः | हर्षावेगचित्रादयः |
| भयानकः | भयम् | विकटादिः | विकटकर्मादिः | पलायनादिः | जडतादयः |
| बीभत्सः | जुगुप्सा | विण्मूत्रादिः | दुर्गन्धादिः | निष्ठीवनादिः | ग्लान्यादयः |
| अद्भुतः | विस्मयः | विस्मयजनक-कर्मकर्ता | विस्मयकर्म | चकितादिः | हर्षादयः |
| शान्तः | निर्वेदःशमो वा | मिथ्यात्वेन परिभाव्यमानं जगत् | तपोवनादिः | अहिहाराद्योः समदर्शनम् | मतिधृति-हर्षादयः |

प्र० ७—पूर्वोक्तनवरसानां लक्षणोदाहरणानि विलिख्योदाहरणेषु तेषु विभावादीनां स्थायिभावपूर्वकं सुविशदनिर्देशः कार्यः।

उ० ७—शृङ्गारादीनां लक्षणं च रत्यादिप्रकृतिकत्वम्। तत्र 'मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः।' तत्प्रकृतिको रसः शृङ्गारः। तत्र शृङ्गारस्य द्वौ भेदौ स सम्भोगो विप्रलम्भश्च। तत्र 'अनुकूलौ निषेवेते यत्रान्योन्यौ विलासिनौ। दर्शनस्पर्शनादीनि स सम्भोगो मुदान्वितः।' शृङ्गारशब्दस्य व्युत्पत्तिस्तावत्—'शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः। पुरुषप्रमदाभूमिः शृंगार इति गीयते' इत्युक्तदिशा स्मरकरम्बितान्तःकरणयोः स्त्रीपुंसयोः परस्परं रिरंसा रतिः तत्प्रकृतिकत्वं शृंगारस्येति' बोध्यम्। सम्भोगः लज्जाद्यैर्निषिद्धान्यपीष्टदर्शनादीनि यत्र कामिनौ सम्भुञ्जाते स सम्भोगः। 'भावो यदा रतिर्नाम प्रकर्षमधिगच्छति। नाभिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते॥' विप्रलम्भः सम्भोगसुखास्वादलोभेन विशेषेण प्रलभ्यते आत्मा यत्र स विप्रलम्भः। अपरिच्छेद्यः परिच्छेत्तुमेतावदेवेतीयत्तां कर्तुमशक्यः। तत्राद्यः सम्भोगः परस्परावलोकनालिंगनाधरपानपरिचुम्बनाद्यनन्तत्वादपरिच्छेद्य एक एव गण्यते। एक एवेति—विप्रलम्भभिन्नत्वे सति संयोगत्वसामान्यरूपत्वे सति रतिप्रकृतिकत्वं सम्भोगत्वमित्येक एव।

नायिकारब्धत्वेन नायकारब्धत्वेन च सम्भोगस्य द्वैविध्यम् । तत्राद्यमाह—'शून्यं वासगृहं०' इति पद्येन । अत्र च नायक आलम्बनम् । शून्यगृहनायकनिद्रादि उद्दीपनम् । मुखनिर्वर्णनचुम्बनादि अनुभावः । लज्जा-हासव्यंग्यहर्षादिर्व्यभिचारिभावः । रतिः स्थायिभावः । तज्ज्ञे सामाजिके नायकनिष्ठस्यैव रसस्य निष्पत्तिः । आलोक्येति लज्जया समानकर्तृकम् ।

द्वितीयं सम्भोगमुदाहरति—'त्वं मुग्धाक्षि०' इति पद्यम् । अत्र मुग्धाक्षी आलम्बनम् । नयनसौन्दर्याङ्गशोभादि उद्दीपनम् । आभाषणवीटिकास्पर्शावनुभावौ उत्कण्ठादयो व्यभिचारिणः । रतिः स्थायीभावः । तज्ज्ञे सामाजिके नायिकानिष्ठरतिविषयकरसनिष्पत्तिः ।

अपरो विप्रलम्भः । अभिलाष-विरहेर्ष्या-प्रवास-शापहेतुक इति पञ्चविधः । अभिलाषाऽप्राप्तसमागमयोः परस्परप्राप्तीच्छा, विरहोऽननुरागाद्दैवप्रतिबन्धाल्लज्जादिवशाच्चासंयोगः, मानकारणमीर्ष्या, प्रवासो विभिन्नदेशस्थितिः, शापः एतावत्कालपर्यन्तं तव संयोगो मास्त्विति सिद्धपुरुषवाग्विशेषः । एतान्हेतूनाश्रित्य जायमानः । तत्राभिलाषहेतुकमाह—'प्रेमार्द्राः प्रणयस्पृशः' इति पद्यम् । अत्र मालती आलम्बनम् । तद्विलासानुस्मरणमुद्दीपनम् । आशंसानुभावः । तद्व्यंग्योत्कण्ठा व्यभिचारिभावः । रतिः स्थायिभावः । विरहहेतुकमाह—'अन्यत्र व्रजतीति का०' इति पद्यम् । कृतसङ्केतनायकस्य रात्रावनागमने विरहोत्कण्ठिताया वितर्कवर्णनमिदम् । अत्रानागतपतिरालम्बनम् । अनागमनादिरुद्दीपनम् । विवर्त्तनादिरनुभावः । हहहेति सूचितो विस्मयो व्यभिचारिभावः । रतिः स्थायिभावः ।

ईर्ष्याहेतुकमाह—'सा पत्युः प्रथमापराध०' इति पद्यम् । स्वप्रेयस्या नवोढाया दुःखमसहमाना काचित् काञ्चित्प्रत्याह—अत्र पतिरालम्बनम् अपराध उद्दीपनम् । रोदनाद्यनुभावः । तद्व्यंग्याऽसूयाव्यभिचारिभावः । रतिः स्थायिभावः । प्रवासहेतुकमाह—'प्रस्थानं वलयैः कृतं०' इति पद्यम् । अत्र प्रियतमम् आलम्बनम् । तत्प्रयाणमुद्दीपनम् । कार्श्यादयोऽनुभावाः । चिन्ता व्यभिचारिभावः । रतिः स्थायिभावः । शापहेतुकमाह—'त्वामालिख्य प्रणयकुपितां०' इति पद्यम् । मेघदूते प्रियामुद्दिश्य मेघं प्रति यक्षस्योक्तिः । अत्र नायिका आलम्बनम् । तत्प्रणयकोप उद्दीपनम् । चरणपातेच्छादिरनुभावः कृतान्तेऽसूया व्यभिचारिणी । रतिः स्थायिभावः ।

'व्यंगव्रीडादिभिश्चेतोविकासो हास उच्यते ।' व्यंगं वैकृतम् । तेन हासप्रकृतिको हास्यः । तथा—'आकुञ्च्य पाणिमशुचि०' इति पद्यम् । अत्र ताड्यमानो विष्णुशर्मा आलम्बनम् । तत्क्रन्दनमुद्दीपनम् । रसाश्रयस्यैतद्वाक्यमनुभावः । चापलादिर्व्यभिचारीति । हासः स्थायिभावः ।

'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्' । आदिग्रहणादनिष्टापत्तेः । शोकप्रकृतिकः करुणः । यथा—'हा मातस्त्वरितासि' इति पद्यम् । राजपत्नीमरणे तत्परिजनविलापोक्तिरियम् । अत्र नायिका आलम्बनम् । विपन्ना काचिदीश्वरी सम्बोध्या । तद्दाहाद्युद्दीपनम् । रोदनमनुभावः । मूर्च्छादयो व्यभिचारिणः । शोकः स्थायिभावः । शोकप्रकृतिकः करुणो रसः सामाजिके व्यज्यते ।

'प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधः उच्यते ।' तत्प्रकृतिको रौद्रः यथा—'कृतमनुमतं दृष्टं०' इति पद्यम् । द्रोणवधक्रुद्धस्याश्वत्थाम्नोऽर्जुनादीन्प्रत्युक्तिः । अत्रापकारिणोऽर्जुनादयः आलम्बनम् । अस्त्राद्युद्यमनमुद्दीपनम् । प्रतिज्ञाऽनुभावः । अन्यनैरपेक्ष्यगम्यो गर्वो व्यभिचारी । क्रोधः स्थायिभावः । क्रोधप्रकृतिको रौद्रो रसः सामाजिके व्यज्यते ।

वीररसमुदाहरति यथा—'क्षुद्राः सन्त्रासमेते०' इति पद्यम् । 'कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।' उत्साहप्रकृतिको वीरः । स च त्रिधा—युद्धवीरो, दानवीरो, दयावीरश्च । अत्र पूर्वोक्तोदाहरणं युद्धवीरस्य । हनुमन्नाटके मेघनादस्योक्तिरियम् । अत्र राम आलम्बनम् । तत्समुद्रबन्धनमुद्दीपनम् । क्षुद्रेषूपेक्षा पराक्रमशालिनि रामे स्पर्धा चानुभावौ । ऐरावतकुम्भचूर्णनस्मृतिः लज्जां दधतीतिगम्यगर्वश्च व्यभिचारिणौ । उत्साहः स्थायिभावः तज्ज्ञे सामाजिके उत्साहप्रकृतिको वीररसो व्यज्यते । अपरावूह्नीयौ ।

'रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्' तत्प्रकृतिको भयानकः । यथा—'ग्रीवाभंगाभिरामं०' इति पद्यम् । मृगानुसारिणो दुष्यन्तस्योक्तिरियम् । अत्र पश्चादनुगच्छन् स्यन्दनो राजा वाऽऽलम्बनम् । शरपतनं चोद्दीपनम् । ग्रीवाभंगादयोऽनुभावाः । श्रमादयो व्यभिचारिणः । भयं च स्थायिभावः, तज्ज्ञे सामाजिके भयप्रकृतिको भयानको रसो व्यज्यते ।

'जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनात् ।' तत्प्रकृतिको बीभत्सः । तमु-

दाहरति—'उत्कृत्योत्कृत्य कृत्तिं' इति पद्येन। स्थपुटं निम्नविषमम्। स्फिचि ऊरुमूले, पृष्ठपिण्डीं। जंघोर्ध्वभागम्। जग्ध्वा भक्षयित्वा। करङ्कः प्रेतशरीरम् प्रेतमस्तकं वा। क्रव्यं पक्वमांसम्। अत्र शवः आलम्बनम्। मांसाशनमुद्दीपनम्। नासाकुञ्चनादयोऽनुभावाः। उद्वेगादयो व्यभिचारिभावाः। जुगुप्सा स्थायिभावः। जुगुप्साजनितो बीभत्सो रसस्तज्ज्ञे सामाजिके व्यज्यते।

'विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात्'। तत्प्रकृतिकोऽद्भुतः। यथा— 'चित्रं महानेष बतावतारः' इति पद्यम्। वामनं प्रति बलेरुक्तिरियम्। अत्र वामनः आलम्बनम्। कान्त्यतिशयाद्युद्दीपनम्। स्तवादयोऽनुभावाः। धृतिहर्षादयो व्यभिचारिणः। विस्मयः स्थायिभावः। विस्मयजनितोऽद्भुतो रसोऽभिज्ञे सामाजिके व्यज्यते।

'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।' तत्प्रकृतिकत्वात्। यथा— 'अहौ वा हारे वा' इति पद्यम्। काश्मीरदेशस्थस्य श्रीमदुत्पलराजस्य पद्यमिदम्। अत्र मिथ्यात्वेन परिभूयमानं जगदालम्बनम्। तपोवनाद्युद्दीपनम्। अहिहाराद्योः समदर्शनमनुभावः। मतिधृतिहर्षाः व्यभिचारिभावाः। निर्वेदः स्थायिभावः। तज्ज्ञे सामाजिके शान्तरसनिष्पत्तिर्व्यज्यते।

अत्र वदन्ति—शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः। न चास्य स्थायी निर्वेदो युज्यते। तस्य विषयेष्वलंप्रत्ययरूपत्वात्मावमाननरूपत्वाद्वा। शान्तेश्च निखिलविषयपरिहारजनितात्मविश्रमानन्दप्रादुर्भावमयत्वानुभावात्। तदुक्तं 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति। अत एव सर्ववृत्तिविरामोऽस्य स्थायीति निरस्तम्। तस्माच्छमोऽस्य स्थायी। निर्वेदादयस्तु व्यभिचारिणः। स च 'शमो निरीहावस्थायामानन्दः स्वात्मविश्रमाद्' इति।

एवां स्थायीभावानाह—'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा। जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः' इति। स्थायिलक्षणमाह—'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः। आनन्दाङ्कुरकन्दोऽसौ भावः स्थायीति संज्ञितः॥' इति सामान्यलक्षणम्। अवस्थितिश्चैषां स्रक्सूत्रन्यायेन फेनबुद्बुदन्यायेन तु व्यभिचारिणमित्यनयोर्भेदः विशेषलक्षणान्युक्तानि।

प्र० ८—व्यभिचारिभावान् नामतो विलिख्य तेषां लक्षणान्यपि प्रदर्शयत ।

उ० ८—[१]निर्वेद-[२]ग्लानि-[३]शङ्काख्यास्तथा[४]ऽसूया-[५]मद-[६]श्रमाः । [७]आलस्यं चैव [८]दैन्यं च [९]चिन्ता [१०]मोहः [११]स्मृति[१२]र्धृतिः ॥ [१३]व्रीडा-[१४]चपलता-[१५]हर्ष-[१६]आवेगो [१७]जडता तथा । [१८]गर्वो [१९]विषाद [२०]औत्सुक्यं [२१]निद्रा[२२]ऽपस्मार एव च । [२३]स्वप्न-[२४]विबोधो[२५]ऽमर्षश्चाप्य[२६]वहित्थम-[२७]थोग्रता । [२८]मति [२९]र्व्याधिस्तथो[३०]न्मादस्तथा [३१]मरणमेव च ॥ [३२]त्रासश्चैव [३३]वितर्कश्च विज्ञेया व्यभिचारिणः । त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ नामत एव समाख्याता न तु लक्षणतः । तल्लक्षणानि यथा—

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् । ( तत्त्वज्ञानं नित्यानित्यवस्तुविवेकः )
तत्र चिन्ताश्रुतिःश्वासवैवर्ण्योच्छ्वासदीनताः। (स्वावमाननम् आत्मनि तुच्छत्वबुद्धिः)
'चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिरि'ति केचित् ॥ १ ॥

रत्याद्यायासमनस्तापक्षुत्पिपासादिसम्भवा ।
ग्लानिर्निष्प्राणता कम्पकार्यानुत्साहितादिकृत् ॥ २ ॥
अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् ।
वैवर्ण्यकम्पवैमुख्यपार्श्वालोकास्यशोषकृत् ॥ ३ ॥

परोत्कर्षाऽक्षमाऽसूया गर्वदौर्जन्यमन्युजा । दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादयः ॥
सम्मोहानन्दसम्भेदःस्खलदंगवचोगतिः । मधुपानादिजो ज्ञेयो मदो विविधभावकृत् ४

उत्तमसत्त्वः प्रहसति तद्वच्च मध्यमप्रकृतिः ।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥ ५ ॥

खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः । श्रमग्लान्योर्विभेदं तु चक्रे कारणकार्यतः ॥

श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे ।
बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः ॥ इत्येके ॥ ६ ॥
आलस्यं श्रमगर्भादेर्जाड्यं जृम्भक्रियादिकृत् ॥ ७ ॥
दौर्गत्यादेरनोजः स्याद् दैन्यं कार्श्यमृजादिमत् ॥ ८ ॥
ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।
प्रयत्नपूर्विकान्वेष्यस्मृतिश्चिन्तेति केचन ॥ ९ ॥

मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः । ( विचित्तता चित्तेन ज्ञानाजननम् )
घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥ १० ॥

 

सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नमनादिकृत् ।
स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ॥ ११ ॥
अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्यासिता धृतिः । ( स्पृहापर्यासिता इच्छानिवृत्तिः )
सौहित्यवदनोल्लाससहासवचना ( प्रतिभा ) दिकृत् ॥ १२ ॥
सङ्कोचश्चेतसो व्रीडा वैवर्ण्याधोमुखत्वकृत् । यद्वा
दुराचारादिभिर्व्रीडा धाष्टर्याभावोऽभिधीयते ।
वस्त्राङ्गुलीयकस्पर्शभूरेखाधोमुखादिकृत्'
( धाष्टर्याभावः चेतसः सङ्कोचः )
चेतोनिमीलनं व्रीडा न्यंगरागस्तवादिभिः । इति केचित् ॥ १३ ॥ (न्यंगं वैकृतं विकारः)
मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः । ( अनवस्थितिः अविमृश्यकारिता )
'आत्मप्रकाशनपरा चेष्टा चपलतोच्यते' इति केचित् ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥
मनप्रसादो हर्षः स्यादिष्टावाप्तिस्तवादिभिः । यद्वा
मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ॥ १५ ॥
'अनर्थातिशयाच्चेतस्यावेगः सम्भ्रमो मतः' ॥ यद्वा
आवेगो रागविद्रावरसादेः सम्भ्रमो मतः ।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ॥ १६ ॥
क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ।
आलस्यं तु क्रियाद्वेषो न त्वत्रेति भिदा ततः ॥ यद्वा
'अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णीभावादयस्तत्र' ॥ ५७ ॥
गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाऽविनयावज्ञादिकृत्तु सः ॥ यद्वा
गर्वो मदप्रभावश्रीविद्यासत्कुलजन्मभिः । अवज्ञा सविलासांगदर्शनाविनयादिकृत् ।
प्रारब्धकार्यासिद्ध्यादेर्विषादःसत्त्वसंक्षयः । (सत्त्वसक्षयः=उत्साहनाशः)
निश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः ॥ १९ ॥
औत्सुक्यं वाञ्छितप्राप्तौ कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ॥ यद्वा
कालक्षमत्वमौत्सुक्यं रम्येच्छारतिसम्भ्रमैः ।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः ॥ २० ॥

निद्रा व्यापारवैमुख्यमिन्द्रियाणां प्रमादिभिः ।
तत्र जृम्भांगभंगाक्षिमीलनोच्छ्वसितादयः ॥ २१ ॥
(इन्द्रियाणामित्युपलक्षणम्, तेन मनसोऽपि । तेन स्वप्नाद्भेदः ।
'मनः क्षेपस्त्वपस्मारो ग्रहावेशादि सम्भवः' इति केचित् ॥

( बीभत्सभयानकयोरेव )

क्वचित्तु 'अपस्मार'स्थाने विस्मृतिः पठिता तथा ।
विरोधिभावात्पूर्वस्य प्रस्मृतिर्विस्मृतिर्भवेत् ।
ध्यानजाड्यप्रमोहाऽऽधिपरितापादिकृत्तु सा ॥ (प्रगता स्मृतिः प्रस्मृतिः)
स्वप्न निद्रामुपेतस्य विषयानुभवस्तु यः । (विषयानुभवः स्वाप्नज्ञानम्)
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥ २३ ॥
निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः । जृम्भांगभंगनयनमीलनांगावलोककृत् ॥
'कोप एव स्थिरतो ह्यमर्ष इति कथ्यते । यद्वा
अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता । (अभिनिविष्टता स्थिरक्रोधः)
तत्र स्वेदशिरःकम्पनेत्ररागांगविक्रियाः ॥ २५ ॥
लज्जाद्यैर्विक्रियागोपोऽवहित्वाऽऽत्मन्यविक्रिया' ।
व्यापारान्तरसंगित्ववदनानमनादयः ॥ २६ ॥ (अवहित्याऽऽकारगुप्तिः)
अधिक्षेपापमानादेश्चित्तचण्डत्वमुग्रता । यद्वा
दुष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ॥ ( चण्डत्वं साहंकारतदसहिष्णुत्वम् )
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥ २७ ॥
शास्त्रोपदेशमन्त्राद्यैरर्थनिर्धारणं मतिः । यद्वा
भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ॥
स्मेरता धृतिसन्तोषौ बहुमानस्तथात्मनि ॥ २८ ॥
विरहादेर्मनस्तापो व्याधिर्दुस्थांगतादिकृत् । यद्वा
व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः ।
प्रस्वेदकम्पतापाद्या अनुभावतयोदिताः ॥ २९ ॥
सन्निपातग्रहादिभ्य उन्मादश्चित्तविभ्रमः । यद्वा
उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ।

( चित्तविप्लवः चित्तविभ्रमः । आसितमवस्थानम् )

तस्मिन्नस्थानरुदितगीतहासाऽऽसितादयः ॥ ३० ॥
जीवस्योद्गमनारम्भो मरणं परिकीर्तितम् ।
सम्मोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत् ॥ यद्वा
रोगाद्यैः प्रागवस्था तु मरणस्य मृतिर्मता ॥ ३१ ॥

( मुख्यमरणस्यालम्बनोच्छेदेन भावत्वायोगाद् । मूर्च्छाऽत्र मरणमित्यन्ये न चान्यत्र सञ्चारित्वाद् गणनं फलवदिति वाच्यम् । स्थाय्यन्तरसाधारणत्वात् । तेऽपि हि क्वचन सञ्चारिणः ।

श्रृंगारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ।
इत्याद्यन्यत् समुन्नेयं स्वयं भावितबुद्धिभिः । इति ॥
गर्जितादेर्मनः क्षोभस्त्रासोऽत्रोत्कम्पितादयः । यद्वा

औत्पातिकैर्मनःक्षोभस्त्रासःकम्पादिकारकः । (औत्पातिकैरुत्पातजन्यैः गर्जितादिभिः)

पूर्वापरविचारोत्थं भयं त्रासात् पृथग्भवेत् ॥ ३२ ॥
ऊहो वितर्कः सन्देहे भ्रूशिरोऽङ्गुलिनर्त्तकः ।
(तर्को 'विचारः सन्देहे' इतिपाठे विचारो विमर्शः ।
यथा च प्राह 'रसगंगाधरकारः' सन्देहाद्यनन्तरं
जायमान ऊहो वितर्कः इति । स च निश्चयानुकूलः)

प्र० ९—अथ 'भावस्य' किं लक्षणम् । सोदाहरणं सप्रपञ्चः स प्रतिपाद्यताम् ।

उ० ९—'रसभावतदाभास०' इति सूत्रे भावोऽप्यलक्ष्यक्रमेषु पठितः । स किंरूपः, इति चेत् 'रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः भावः प्रोक्तः' इति । आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता श्रृंगारः ।

रत्यादीनां रसरूपत्वात्, व्यभिचारिणां रसांगतानियमेन प्राधान्याभावात्, सात्त्विकानामव्यंगयत्वादित्यतः क्रमप्राप्तं भावं लक्षयति—'रतिरि'ति । रतिरिति सकलस्थायिभावोपलक्षणम् । देवादिविषयेत्यपि अप्राप्तरसावस्थोपलक्षणम् । तथा शब्दश्चार्थे । तेन देवादिविषया सर्वप्रकारा तथा कान्तादिविषयाऽपि अपुष्टा रतिः हासादयश्च अप्राप्तरसावस्थाः विभावादिभिः प्राधान्येनाञ्जितो व्यञ्जितो

व्यभिचारी च भावः प्रोक्तः भावपदाभिधेयः कथित इति सूत्रार्थः यदुक्तम्—'रत्यादिश्चेन्निरंगः स्याद्देवादिविषयोऽथवा। अन्यांगभाग्वा स्यान्न तदा स्थायिशब्दभाक्' इति। तदेतदाह वृत्तिकारः—'कान्तादिविषया तु व्यक्ता शृङ्गारः। तत्र देवविषया रतिर्यथा—'कण्ठकोणविनिविष्ट०' इति पद्यम्। श्रीमदुत्पलाचार्यप्रणीतपरमेश्वरस्तोत्रावलौ पद्यमिदम्। अत्र महादेव आलम्बनम्। ईशपदप्रतिपाद्याव्याहतैश्वर्यमुद्दीपनम्। स्तवोऽनुभावः। धृतिमाहात्म्यस्मरणादयो व्यभिचारिणः। अत्रैतैरनुमितस्तावकरतीनां सामाजिकानां तैरेव विभावादिभिर्व्यञ्जिता रतिर्भाव एवेति बोध्यम्। मुनिविषया यथा—'हरत्यघं सम्प्रति हेतुरेष्यतः०' इति पद्यम्। अत्र श्रीकृष्णस्य मुनिविषयाया रतेर्मुनिरालम्बनम्। दर्शनयोग्यताव्यञ्जनमुद्दीपनम्। श्रीकृष्णस्येयमुक्तिरेवानुभावः। तद्व्यंग्यहर्षश्च व्यभिचारी। मुनिविषयकश्रीकृष्णरतिज्ञे सामाजिके भावनिष्पत्तिः एवमेव गुरुविषया, नृपविषया, पुत्रविषया च रतिरुदाहरणेषु टीकायां दत्तेऽवलोकनीया।

कान्ताविषयाऽपुष्टा रतिर्यथा-कुमारसम्भवे 'हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः। उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि' प्रधानतया वर्णितं व्यभिचारिणमुदाहरति—'जाने कोपपराङ्मुखी०' इति पद्यम्। विमुक्तस्य कस्यचित् स्वमित्रं प्रत्युक्तिरियम्। अत्र विधिं प्रति असूया प्राधान्येन प्रतीयते जाने शठेत्यनेन निर्णीतापकरित्वेनासूयाप्रकर्षः। विधिरत्रालम्बनम्। विधिदौर्जन्यमुद्दीपनम्। शठत्योक्तिरनुभावः प्राधान्येन व्यञ्जितोऽसूयारूपो व्यभिचारी भावपदाभिधेयः।

ननु नायिकालम्बनस्य तत्कोपोद्दीपितस्य स्वप्नादिष्टचनुभावितस्य विप्रलम्भस्य सत्त्वात्तद्ध्वनित्वमेव स्यादत आह—'असूयेति' शठपदगम्या प्राधान्येन प्रतीयते इति। पर्यन्ते तु रसस्यैव प्राधान्यम्। मध्यमव्यङ्ग्यमादायैव ध्वनित्वादिव्यवस्थितेरिति बोध्यम्। नन्वत्र शठेव विधिनेतिवत्। 'त्वामालिख्य प्रणयकुपितां०' इति पद्ये क्रूरपदेनासूया प्राधान्येन व्यज्यते तत्रापि भावध्वनित्वमेव। तत्कथं विप्रलम्भोदाहरणमिति चेन्न। तत्र 'दृष्टिरालुप्यते मे' इत्यनेन विप्रलम्भावगमेऽनन्तः प्रतीयमानाया असूयाया विप्रलम्भांगत्वस्यैवौचित्यात्।

**प्र० १०—रसाभासभावाभासयोरपि स्वरूपं सोदाहरणं विलिखत।**

उ० १०—'तदाभासा अनौचित्यप्रवर्तितः' इति सूत्रांशेनानौचित्येन प्रवर्तिताः तदाभासा रसाभासा भावाभासाश्चेति तान् लक्षयति । तत्पदेन रसभावयोः परामर्शः न तु संनिहितत्वेन भावस्यैवेत्याह—'रसाभासा भावाभासाश्चेति । अनौचित्यं हि शास्त्रलोकातिक्रमात् प्रतिसिद्धविषयकत्वादिरूपं सामाजिकसंवेद्यम् । तच्च सहृदयव्यवहारतो ज्ञेयम् यत्र तेषामनुचितमिति धीः । तच्च शृङ्गारे बहुविषयत्वेन उपनायकादिगतत्वेन नायकनायिकान्यतरमात्रविषयत्वेन, गुरुजनगतत्वेन नानैव । तदुक्तम्—'उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च । बहुनायकविषयतायां रतौ तथानुभवनिष्ठायाम् ॥ आभासत्वं तथैव च तिर्यगादिविषयतायाम्' इति । तथा हि गुर्वाद्यालम्बनया हासस्य वीतरागाद्याश्रयतया करुणस्य, पित्राद्यालम्बनया रौद्रवीरयोः, वीरगतत्वेन भयानकस्य, यज्ञीयपशुवधाद्यालम्बनतया बीभत्सस्य, ऐन्द्रजालिकाद्यालम्बनतयाऽद्भुतस्य, चण्डालादिगतत्वेन शान्तस्य चाभासत्वं ज्ञेयम् । अत्र रसाभासत्वं यथा—'स्तुमः कं वामाक्षि०' इति पद्यम् । अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते । न चात्र व्यापारस्य बहुविषयत्वमसिद्धम् । एकत्रापि तादृशव्यापारसम्भवात् । यत्तु अनेककर्मपदोपादानमनेकविषयत्वं क्रियाणां प्रकटयति । एकविषयत्वाभिप्राये त्वेकमेव कर्मपदमुपादयितेति तत्तुच्छम् । स्तुमो विलेम इत्यादीनां भिन्नवाक्यानामेकविभक्त्यन्तपदोपस्थापितेनानन्वये तदन्वयिनोऽभिन्नस्यापि कं क इत्यादिपदैरुपस्थापने भिन्नकर्मपदैरेवोपस्थापनार्हणात् । अत्र ब्रूमः—'तु' शब्देन व्यवच्छेदार्थेन व्यापारस्यानेकविषयत्वं लभ्यते । एवमेकत्र भेदाभिप्रायेऽवगतेऽन्यत्रापि तथैवावगम्यते, बहुपदमनेकपरं वा ।

भावाभासो यथा—'राकासुधाकरमुखी०' इति पद्यम् । सीतामुद्दिश्य रावणोक्तिरियम् । अत्र रतेर्व्यभिचारिभूता चिन्ताऽनौचित्यप्रवर्तिता । नायिकाया अननुरक्ततया रतेरनुत्कृष्टत्वेन तद्व्यभिचारिणोऽपि तथात्वात् । एवमन्येऽप्युदाहार्याः ।

प्र० ११—व्याख्यायतां 'भावस्य शान्तिरुदयः सन्धिः शबलतया तथा' इति ।

उ० ११—'भावशान्त्यादिरक्रमः' इत्यत्र भावशान्त्यादिपदप्रतिपाद्यमाह—

'भावस्य शान्ति'रित्यादिना। सन्धिरेककालमेव तुल्यकक्षयोरास्वादः। शबलता तु कार्यभेदेन निरन्तरतया पूर्वपूर्वोपमर्दिनाम्। न च भावस्य शबलतायाः शान्त्युदयाभ्यामविशेषः। शान्तेरुदयस्य वा एकैकस्यास्वादे तद्भेदद्वयोपगमात्। एवं शान्त्युदयावुत्पत्तिकालावच्छिन्नावेव चमत्कारिणाविति बोध्यम्। स्थायिनां त्वेते न सम्भवन्ति तेषां सन्ततमविच्छेदात्। तत्र भावस्य शान्तिर्यथा—'तस्याः सान्द्रविलेपन०' इति पद्यम्। अमरुशतके खण्डितायाः स्वनायिकायाः कोपतच्छान्तिवृत्तान्तं वयस्यं प्रति कथयतो धृष्टनायकस्योक्तिरियम्। अत्र कोपरूपभावस्य शान्तावेव चमत्कारविश्रामः। न तु विद्यमानेऽपि प्रसादोदये तदनुभावाद्यनुल्लेखादिति बोध्यम्। तदेवाहात्र—कोपस्येयि शान्तिरिति शेषः।

भावस्योदयो यथा—'एकस्मिन्शयने विपक्ष०'इति पद्यम्। अमरुशतके पद्यमिदम्। अत्र सुरतविषयस्यौत्सुक्यस्योदयश्चमत्करोति न तु सत्यपि कोपशान्तिः तदनुभावानुपादानात्। तदेवाह—'अत्रौत्सुक्यस्ये'ति उदयः इति शेषः। भावस्य सन्धिर्यथा 'उत्सिक्तस्य तपःपराक्रम०' इति पद्यम् महावीरचरितनाटके द्वितीयेऽङ्के सीतामालिङ्गतः श्रीरामस्य परशुरामागमने उक्तिरियम्। अत्र मुनावित्यादरणीयत्वज्ञानजन्यत्वराविशेषः पूर्वार्धगम्यः। हर्षस्तूत्तरार्धगम्यः। अनयोस्तुल्यकालमेवास्वाद इति तयोः (आवेगहर्षयोः) मिलनरूपः सन्धिः। अत्र परिरम्भकृतहर्षेण सत्सङ्ग्रियतोत्साहोभयकृतत्वादावेगस्तुल्य इति बोध्यम्। तदेवाह—'अत्रावेगहर्षयोरिति। सन्धिरिति शेषः। आवेगस्त्वराविशेषः। भावशबलता यथा—'क्वाकार्यं शशलक्ष्मणः' इति पद्यम्। विक्रमोर्वशीये। चतुर्थेऽङ्के उर्वशीं दृष्ट्वा पुरूरवसः उक्तिरियम्। अत्र 'क्वाकार्य'मित्यादौ वितर्कः, भूयोऽपीत्यौत्सुक्यम्, दोषाणामिति मतिः, कोपेऽपीति स्मृतिः, किं वक्ष्यन्तीति शङ्का, स्वप्नेऽपीति दैन्य, चेतसः स्वास्थ्यमिति धृतिः, कः खल्विति चिन्ता, स्फुटं पूर्वपूर्वोपमर्दन प्रतीयमाना शबलता चमत्कारभूमिः। ननु भावस्य शान्त्यादिवत्स्थितिरपि प्रकारः सम्भवत्येव, तत्कथं नोक्त इति चेन्न। भावोक्त्यैव तदुक्तेः। भावस्थितेर्भावाभिन्नत्वात्। ननु व्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानं तत्कथं भावोदाहरणमेतत्, कथं वा भावध्वनित्वं, रसाङ्गेन तेषां गुणीभावादित्यत आह—'मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन' इति ते भावशान्त्यादयः कदाचन यदा त एवाङ्गित्वेन विवक्ष्यन्ते, राजानुगतविवाहप्रवृत्त-

भूतत्ववत् । भावशान्त्यादयः भावश्च शान्त्यादयश्चेति द्वन्द्वः भावस्थितिशान्त्यादय-श्चेति पाठः सुगमः ।

प्र० १२—'अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥'

कारिकामिमां सम्यग्व्याख्याय तत्र निर्दिष्टसंलक्ष्यक्रमव्यङ्ग्यस्य त्रैविध्यं तत्स्वरूपञ्चोदाहरणपुरःसरं प्रतिपादयत ।

उ० १२—अनुस्वानेति । घण्टायां हन्यमानायां मुख्यशब्दानन्तरं क्षोदीयान-परोऽनुरणनरूपः शब्दः प्रतीयते तद्वत्संलक्ष्यक्रमा व्यङ्ग्यस्थितिर्यत्र स शब्दश्चा-र्थश्चेति शब्दार्थौ च उभयं चेति तेषां शक्तिश्च शब्दार्थोभयशक्तिः, तस्या उत्थं तत उत्तिष्ठतीति शब्दार्थोभयशक्त्युद्भवः त्रिधा त्रिप्रकारको ध्वनिरित्यर्थः । तथा च शब्दशक्तिमूलव्यङ्ग्यः अर्थशक्तिमूलव्यङ्ग्य उभयशक्तिमूलव्यङ्ग्यश्चेत्यर्थः ।

शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव शब्देन तदर्थप्रतीतिः न तु पर्यायान्तरेणापि । एतद्वैपरीत्यं चार्थशक्तिमूलत्वं न त्वभिधया तत्प्रतीतिरिति । एतेन 'अभिधाया यत्र न नियमनं तत्रैव भेदो द्रष्टव्यः । तन्नियमने तु नाभिधामूलत्वं किन्तु व्यञ्जनामूल-त्वमेव 'भद्रात्मन०, इतिवद्भवेदि'ति यत्केनचिदुक्तं तन्नादेयम् । 'भद्रात्मन' इत्या-देरपि एतद्भेदत्वेनेष्टत्वात् । अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः । किञ्च शब्दशक्ति-मूलव्यङ्ग्योदाहरणेषु । उल्लास्येति, तिग्मरुचिरिति; अमित इति त्रिष्वप्युदाहरणेषु क्रमेण प्राकरणिकाप्राकरणिकयोरिति व्याख्यानेन, भवानित्यनेन तथा च असीत्यनेन प्रकरणस्याभिधानियामकस्य स्पष्टत्वात्तेषामुदाहरणत्वं विरुद्ध्येत तस्माद्यथोक्तमेव व्याख्येयम् ।

तेषु मध्ये शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो द्विधा । यथा—'अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते । प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥' इति । अलङ्कारध्वनिर्वस्तुध्वनिश्चेति द्विप्रकारकः । अलङ्कृतस्यानलङ्कृतवस्तुमात्रस्य वा प्राधान्येन प्रकाशात् । प्राधान्येनेत्यनेन शब्दस्य यत्र प्राधान्यमर्थस्यापि साचिव्य-मथवा प्राधान्येनेत्येनन गुणीभूतव्यङ्ग्यनिरासः ध्वनिरित्यर्थः ।

तत्र शब्दशक्तिमूलालङ्कारध्वनिमुदाहरति-उल्लास्येत्यनेन । कालकरवाल-महाम्बुवाहम्—कालो वैरिसंहर्त्ता यः करवालः स एव महदम्बुधाराजलं वहतीति महाम्बुवाहः तम् । यद्वा महः उत्सवः स एवाम्बु तद्वाह, जरठोर्जितगर्जितेन—

जरठं कठोरम् ऊर्जितं बलवत् गर्जितं सिंहनादो यस्य तथाविधेन। अप्राकरणिक (व्यङ्ग्य) पक्षे—येन देवेन मेघाधिपतिना (प्राकरणिके देवो राजा) इन्द्रेण जरठं गम्भीरम् ऊर्जितं यद् गर्जितं गर्जनं तेनोपलक्षितम्। कालकरं कृष्णरश्मि वर्षर्तुकालसूचकं वालं (बालं) (बवयोरभेदात्) नवीनम् महाम्बुवाहं मेघमुल्लास्य प्रकाश्य रणे अंगारादिषु जले पात्यमाने जायमानः शब्दो रणः (प्राकरणिके युद्धभूमौ) तस्मिन् सति धाराजलैः धाराकृतिभिर्जलैः त्रिभुवने रिपूणामर्थात् जलशत्रूणां तेजसा सकलः प्रकृष्टः तापः औष्ण्यं निर्वापितः शमितः इत्यर्थः। अत्र प्रकरणेन प्रथमार्थे (राजार्थे) अभिधाया नियन्त्रणात् तथा बोधयितुमशक्यो वस्तुरूपो द्वितीयार्थो (इन्द्रविषयकः) व्यंग्य एव। अत्र 'करवालमुल्लास्यै'तावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्यासम्बद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैरिन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावं कवितात्पर्यमित्युपमाऽलङ्कारो व्यंग्यः। स च शब्दशक्तिमूलः। पर्यायान्तरेण भूपादिना यदर्थोपस्थितौ तदप्रतीतेः। एवमग्रेऽप्यूह्यम्। यथा 'तिग्मरुचिरप्रताप०' इत्यत्र तिग्मरुचिरश्च प्रतापो यस्येति प्राकरणिकार्थः। तिग्मरुचिः अप्रतापः इति एवं क्रमेण विधुः अनिशाकृत, मधुः अलीलः मतिमान् अतत्त्ववृत्तिरिति एकैकपदस्य द्विपदत्वे विरोधाभासो व्यंग्यः। अत्रोदाहरणे पदभेदेन विरोधाभासो द्योतितः। पदाभेदेऽपि विरोधाभासो यथा—'अमितः समितः' इत्यत्र। अत्र विचार्यते किं विरोधस्य सर्वत्र व्यंग्यत्वमेव, नेत्युच्यते। अपिशब्दादेर्विरोधव्यञ्जकस्य भावे सति वाच्यत्वम्, तदभावे व्यंग्यत्वम् इति। अधुना व्यतिरेकालङ्कारध्वनिरुदाह्रियते यथा 'निरुपादानसम्भारे'ति। अत्र चित्रं नानाकारमालेख्यं च कला चन्द्रस्य षोडशो भागः। अन्यत्र कौशलञ्च अत्रोपादानैः तूलिकाद्युपकरणैः भित्तावेव चित्रपदादिष्वेवालेख्यकारिभ्यः कलावद्भ्यो जगच्चित्रं नानाकारम् अभित्तावेव शून्ये एव तन्वतः शूलिनो व्यतिरेको व्यंग्यः। अत्र चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता।

अथ 'वृत्तिगतवाक्यमलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता' इति व्याख्याति। ननूदाहृतेषूपमादीनां प्राधान्यं न वा प्राधान्यं चेत् कुतस्तेषामलङ्कारत्वम्। अन्यानलङ्करणात्। अप्राधान्ये कुतोऽस्य काव्यस्य ध्वनित्वम्। व्यंग्यस्याप्राधान्यात्। इति चेन्नैवम्। पूर्वमयमलङ्कार आसीदित्येतावताऽलङ्कारव्यप-

देशात्। यथेदानीं श्रमणः बौद्धसंन्यासी पूर्वं ब्राह्मण आसीत् इति स ब्राह्मण इति कथ्यते तथा। न चैवं व्यपदेशसमर्थनेऽप्यलङ्कारध्वनित्वं न समर्थितमिति चेन्न। अलङ्कारपदेन तद्योग्यताया विवक्षितत्वात्। न चैवं रसादिध्वनावपि अलङ्कारध्वनित्वप्रसंगः संलक्ष्यक्रमस्यैव तादृशस्य तथाभिप्रेतत्वात्। वस्तुतस्तु प्राधान्याप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव, न तु रसापेक्षयापि। तदपेक्षया सर्वत्र गुणीभावात्। तथा चोपमादीनां रसाङ्गतयाऽलङ्कारत्वम्, वाच्यापेक्षया प्राधान्यं चेति न दोषलेशावकाशः।

एवं शब्दशक्तिमूलालङ्कारध्वनिमुदाहृत्याधुना शब्दशक्तिमूलवस्तुरूपध्वनिमुदाहरति, यथा—'पंथिअ' इति।

पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस॥ इति छाया॥

स्रस्तरम्—(१) कटाद्यास्तरणम्, (२) शास्त्रम् कामशास्त्रमिति वा।

प्रस्तरस्थले—(१) पाषाणप्रचुरे स्थले, (२) पाषाणानां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मये ग्रामे।

अत्र शास्त्राभावादाकारेङ्गितज्ञानाधिकरणे ग्रामे, सति चैवंविधे उद्दीपने घेमे श्लेषमर्यादया उन्नतस्तनदर्शने च को नाम उपभोगक्षमोऽन्यत्र गन्तुमर्हतीति वक्त्रभिप्रायो व्यञ्जनया प्रकाशते इत्यर्थः। इच्च पयोधरेति शब्दशक्तिमूलमेव। तथा—'शनिरशनिरि'ति। अशनिर्वज्रः। न शनिः। अनुदारः—अनुगता दाराः यस्य न उदारः इति। अत्र प्रथमार्धे 'शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्तनार्थमेककार्यं कुरुतः' इति वस्तु ध्वन्यते न तु विरोधालङ्कारः। शनिरशनिरित्यनयोः सामानाधिकरण्याभावात्। विरोधस्य तत्रैव विश्रान्तेः। द्वितीयार्धे तु नोदाहरणम्। तत्र 'च' शब्दस्य अप्यर्थत्वे विरोधस्य वाच्यत्वात्। समुच्चयमात्रार्थत्वे विरोधस्यैव व्यङ्ग्यत्वादिति।

इत्थं शब्दशक्तिमूलं द्विविधं ध्वनिं निरूप्येदानीमर्थशक्तिमूलानुरणनरूपव्यङ्ग्यं द्वादशविधत्वेन विभजते। तथा च कारिकाद्वयम्—

अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः।
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा॥

वस्तु वाऽलङ्कृतिर्वेति षडभेदोऽसौ व्यनक्ति यत् ।
वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः ॥

वस्तु वाऽलङ्कृतिर्वेति । (१) स्वतःसम्भवी, न केवलं भणितिनिष्पन्नशरीरोऽपि तु बहिरपि औचित्येन प्रतीयमानः सम्भाव्यमानः । (२) प्रौढोक्तिमात्रसिद्धः बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा निर्मितः, (३) कविनिबद्धेन वक्त्रा तथा निर्मित इति त्रिधा । अयमर्थः व्यञ्जकोऽर्थस्त्रिधा । (१) स्वतःसम्भवी, (२) कविप्रौढोक्तिमात्रसिद्धः, (३) कविनिबद्धनायकादिवक्तृप्रौढोक्तिमात्रसिद्धश्चेति । अत्र प्रौढोक्तिः चमत्कारानुगुणोक्तिर्ज्ञेया । एवं त्रिविधोऽपि प्रत्येकं वस्तुमात्रमलङ्कृतिर्वेति षड्विधो व्यञ्जकः । एतेषां षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वाऽलङ्कृतिर्वेति द्वादशभेदा भवन्ति ।

तत्र स्वतःसम्भविन्यर्थे भेदचतुष्टये । (१) वस्तुना वस्तुनो व्यक्तिर्यथा—अलसशिरोमणीत्यत्र । इदं पदं, तस्य च्छाया—'अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः । इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥' अत्रालसत्वेन प्रवासो नायिकान्तरगृहे च गन्तुमनिच्छुः, धूर्तत्वेन रतेष्वनाढ्यगुणो, धनसमृद्धिमयतया कृपणः सुखी चेति निर्धार्य यत्प्रफुल्लनयनत्वं हर्षव्यञ्जकं वस्तु तेनान्यासामनाकर्षणीय इति, ममैवोपभोग्य इति वस्तु व्यज्यते (२) वस्तुनाऽलङ्कारस्य व्यक्तिर्यथा—'धन्याऽसि या कथयसी'ति उदाहरणम् । रतिकालीनं स्वप्रियालापं कथितवतीं काञ्चिदुपहसन्त्याः त्वमिदानीं स्वरतिवार्तां कथयेति सखीप्रेरितायाः उक्तिरियम् । अत्र वाच्येन सखीं प्रति धन्यत्वोक्तिरूपेण वस्तुना स्वस्य महानन्दाप्तिसूचनद्वारा 'त्वमधन्येति' व्यतिरेकालङ्कारो व्यज्यते । (३) अलङ्कारेण वस्तुनो व्यक्तिर्यथा—'दर्पान्धगन्धगजे'त्युदाहरणम् । अत्र 'दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तिनिघ्नघनशोणितरोचिः' इति पदस्यैव विग्रहः—दर्पेण मदेनान्धः मदोद्रिक्तः यो गन्धगजः, तस्य कुम्भयोः गण्डस्थलयोः कपाटं विशालतया दुर्भेद्यत्वात् कपाटमिव मध्यभागः तस्य कूटमग्रभागः तदेव कठिनत्वात् कूटं लोहमुद्गर इव तत्र संक्रान्त्या सम्बन्धेन ( पतनेन ) सम्यक् प्रविशनेन वा निघ्नं दृढसम्बद्धं घनं निबिडं यत् शोणितं रुधिरं तेन शोणं रक्तं रोचिः कान्तिर्यस्य यत्र वा तादृश इत्यर्थः । अत्र 'कालीकटाक्ष इव कृपाणो व्यलोकि इत्युपमा, न पुनरुत्प्रेक्षा सम्भावनाविरहात् । शोणरोचिः, कषायकान्त्या

बिम्बप्रतिबिम्बभावेन समानधर्मत्वात् सा च स्वतःसम्भविनी, सादृश्यस्य लोकेऽपि सत्त्वात् तया चोपमया 'सकलरिपुक्षयः क्षणात्करिष्यते' इति वस्तु व्यज्यते। (४) अलङ्कारेणालङ्कारस्य व्यक्तिर्यथा—'गाढकान्तदशने'त्युदाहरणे। अत्र ओष्ठविषयको दशनमोचनयोर्विरोधः। यो हि निजमप्यधरं दशति स कथं परेषामधरान्मोचयतीति स्वतःसम्भविना विरोधाभासालङ्कारेण प्रकृतयोः स्वाधर-दशनशत्रुव्यापादनयोरेककालरूपैकधर्मसम्बन्धेन तुल्ययोगितालङ्कारो व्यज्यते। एव मम राज्ञो दन्तक्षतया अन्यस्यापि नृपवधूजनस्यापि क्षतिर्निवर्ततामिति नृप-बुद्धिरुत्प्रेक्ष्यते। इत्युत्प्रेक्षालङ्कारोऽपि व्यज्यते। एषु चतुर्षूदाहरणेषु व्यञ्जकोऽर्थः स्वतःसम्भवी इति।

कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे भेदचतुष्टये १. वस्तुना वस्तुनो व्यक्तिर्यथा—'कैलासस्य प्रथमशिखरे'त्युदाहरणम्। व्यङ्ग्यं दर्शयति—अत्र कविप्रतिभा-मात्रनिष्पन्नाद् यशसः श्रवणप्रवेशाद् बिसिनीसम्भावनया कर्णे हस्तावर्तनरूपेण कविप्रतिभामात्रनिष्पन्नेन वस्तुना येषां जडानामपि दिग्गजानामर्थाधिगमः गीतार्थज्ञानं नास्ति तेषामप्येवं श्वैत्यमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्करो-तीति वस्तुमात्रं व्यज्यते। अत्र च कीर्तिश्रवणानन्तरं कर्णे हस्तावर्तनं हस्तिनो न स्वतःसम्भवि किन्तु कविसम्प्रदायात् कविना वर्णितमिति कविप्रौढोक्तिसिद्ध-त्वम्। २. कविप्रौढोक्तिमात्रसिद्धेन वस्तुनाऽलङ्कारस्य यथा—'केसेसु बलामो-डिये'त्यादिप्राकृतश्लोकः। तस्य छाया—'केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता। यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः' इति। तेन पराजिताः शत्रवो गुहास्वेव तिष्ठन्तीति भावः। अत्र कन्दराभिः कण्ठे स्थापिताः इत्येवंरूपेण कविप्रतिभामात्रसिद्धेन वस्तुना केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति इत्युत्प्रेक्षा। एकत्रैव सङ्ग्रामे विजय-दर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्ति इति काव्यलिंगम्, न पलाय्य गतास्त-द्वैरिणोऽपि तु ततः पराभवं सम्भाव्य ताः कन्दरा एव न तांस्त्यजन्ति इति अपह्नुतिश्च अलङ्कारा व्यज्यन्ते। ३. कविप्रौढोक्तिमात्रसिद्धेनालङ्कारे वस्तुनो व्यक्तिमुदाहरति यथा—गाढालिङ्गणम्, इत्यादि। छाया 'गाढालिङ्गनरभ-सोद्यते दयिते लघु समपसरति। मनस्विन्या मानः पीडनभीत इव हृदयात्' इति। अत्र पीडनभीरुरिवेत्युत्प्रेक्षाऽलङ्कारेण 'जा ठेरं व हसन्ती' इति प्राकृत-पद्यम्। अस्य छाया—

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥

अत्र 'जा ठेरं व हसन्ती'त्युत्प्रेक्षालङ्कारेण चमत्कारैककारणं नवं नवं जगत् अम्बुजासना (जडजलामिति डलयोरभेदात्) कविवदनस्था ( अजडासना ) निर्मिमीते इति वाच्या ब्रह्मणो व्यतिरेकः प्रकाश्यते । यद्यप्युत्प्रेक्षां विनापि व्यतिरेकोऽयं प्रकाशते नियतिकृतनियमेत्यादिवत् तथापि न स्फुटो भवतीति । यद्वा तावन्मात्रस्य व्यञ्जकत्वेऽपि उत्प्रेक्षाव्यञ्जकत्वं न विहन्यते इति यद्वृत्तौ चमत्कारैककारणं नवं नवं जगत् अजडासनस्था इत्युक्तं तत्र स्थविरमिव हसन्तीत्यनेन चमत्कारैककारणत्वांशलाभः । अन्यदिवेत्युत्प्रेक्षया नवनवत्वलाभः । कविवदनेत्यादिना अजडासनस्थेत्यंशलाभः । एषु पूर्वोक्तचतुर्षूदाहरणेषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

एवं कविप्रौढोक्तिमात्रनिष्पन्नभेदचतुष्टयमुदाहृत्य कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थस्य ध्वनेश्चतुर्षु भेदेषु मध्येऽधुना वस्तुना वस्तु व्यज्यते—यथा 'जे लङ्कागिरिमेहलासु' इति प्राकृतपद्यमुदाहृतम् । तस्य छाया—'ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् । त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥' इति । ये वाताः लङ्कागिरेर्हेमकूटस्य नितम्बेषु सर्पत्रासात् स्खलिताः सम्भोगेन श्रान्तानां सर्पिणीनां वितता ऊर्ध्वप्रसृता या फणापङ्क्तिः तया कवलने भक्षणे सति क्षीणत्वं प्राप्ताः ( स्वल्पावशिष्टाः ) इदानीं विरहिणीनिःश्वासैरीषत्सम्बद्धा एव प्राप्तैश्वर्या शीघ्रमेव शिशुत्वेऽपि तारुण्येन पुष्टावयवा इव जाताः इत्यर्थः । अत्र वस्तुना वाच्यार्थरूपेण 'निश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्ति' इति वस्तु व्यज्यते । २. वस्तुनाऽलङ्कारस्य व्यक्तिर्यथा—'सहि विरइऊण' इति प्राकृतपद्यमुदाहरणम् । छाया—'सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम् । प्रियदर्शनविश्रृङ्खलक्षणे सहसेति तेनापसृतम्' इति । किमिति मानं त्यक्तवतीति वदन्तीं सखीं प्रति नायिकाया उक्तिरियम् । धैर्येण मम मानस्याश्वासनं कृत्वा प्रियदर्शनविश्रृङ्खलक्षणे सहसाऽपसृतम् । इति वाच्येन वस्तुनाऽकृतेऽपि प्रियप्रार्थने सा प्रसन्ना कारणाभावेऽपि कार्योत्पत्तिरूपविभावनाऽलङ्कारः । ननु प्रियदर्शनसौभाग्यबलं धैर्येण सोढुं न शक्यते इति चोत्प्रेक्षालङ्कारश्च व्यज्यते । ३. अत्रेऽलङ्कारेण वस्तु

व्यज्यते यथा 'ओल्लोलकर०' इति प्राकृतं पद्यमुदाहरणम् । छाया—'आर्द्रार्द्रक-रजरदनखक्षतैः तव लोचनयोर्मम दत्तम् । रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते ॥' इति ।

भर्तरि सपत्न्या कृतं नखक्षतादिकं दृष्ट्वा कोपारक्तनयना भर्तुः प्रश्नमुत्तरयति तत्र । अत्र किमिति कुपिते लोचने वहसीति प्रश्नोन्नयनादुत्तरालङ्कारेण न केवलमार्द्रक्षतानि गोपायसि तेषामहं प्रसादपात्रमपि जाता इति वस्तु व्यज्यते, कोपेन पुनरिमे नाक्रान्ते इति अपह्नुतिसहितेन वस्तुव्यक्तिः । ४. अत्रैवालङ्कारेणालङ्कारस्य यथा 'महिलासहस्सभरिये' इति प्राकृतपद्यमुदाहरणम् । छाया—'महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती । अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति' । अत्र विरहकृशां नायिकां नायकाय वेदयन्त्याः सख्या उक्तिरियम् । अत्रामान्तीत्यत्र महिलासहस्रभरितत्वं हेतुः । तनूकरणे च अमान्तीत्वं हेतुः । अतो महिलासहस्रभरितत्वात्तव हृदि स्थानं न लभ्यते, ततोऽङ्गं तन्वपि तनयतीति 'हेत्वलङ्काराभ्यां तनोस्तनूकरणेऽपि तव हृदये न वर्तते इति कारणसत्त्वेऽपि कार्यानुत्पत्तिरूपो विशेषोक्तिरलङ्कारो ध्वन्यते । एषु चतुर्षूदाहरणेषु कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थः । एवम् अर्थशक्त्युद्भवध्वनेर्द्वादश भेदाः ।

एवं द्विविधं शब्दशक्तिमूलं द्वादशविधमर्थशक्तिमूलं च संलक्ष्यक्रमव्यङ्ग्यं निरूप्येदानीमेकविधमुभयशक्तिमूलं निरूपयति 'अतन्द्रचन्द्राभरणे'ति उदाहरणेन । शब्दाश्चार्थश्च शब्दार्थौ तद्रूपं यदुभयं तद्भूः तच्छक्त्युद्भवः एको वस्तुनाऽलङ्काररूप इति कारिकार्थः । ननु शब्दशक्तिमूलेऽप्यर्थस्य, अर्थशक्तिमूलेऽपि शब्दस्य व्यञ्जकत्वमस्तीति उभयशक्तिमूलकत्वं सर्वथैवास्तीति चेन्न । तत्र तयोर्गुणप्रधानभावेन व्यञ्जकत्वं प्रतिपादितम् । अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमित्युभयशक्तिमूलत्वमिति ज्ञेयम् । अत्रोदाहरणे अतन्द्रः स्फुरद्रूपः चन्द्रः एवाभरणं भूषणं यस्याः सा अत एव सम्यगुद्दीपितः प्रबलीकृतो मन्मथो यया सा, तारका नक्षत्राणि तरला स्वल्पाः यस्यां सा श्यामा रात्रिः कं जनं सानन्दं न करोति अपि तु सर्वमेवानन्दयतीति रात्रिपक्षेऽर्थः । अतन्द्रा: सुरतादावालस्यरहिता सा चासौ चन्द्रः कर्पूरं सुवर्णनिर्मितशिरोभूषणविशेषो वा आभरणं यस्याः सा । मुदा हर्षेण सहिता समुद्दीपितो दीप्तिं प्रापितो मन्मथो यया सा दीपितमन्मथा तारका अक्षिगतकृष्ण-

कनीनिका तरला चञ्चला यस्याः सा। यद्वा तारकावत् नक्षत्रवद्दीप्तः तरलो हार-मध्यमणिर्यस्याः सा। एवम्भूता श्यामा षोडशवार्षिकी नायिका कं पुरुषं सानन्दं न करोतीति नायिकापक्षेऽर्थः।

अत्रैव रीत्याऽर्थद्वयप्रतीतौ स्त्रीविशेष इव रात्रिरिति, ज्योत्स्नी रात्रिरिव नायिकेति वा उभयत्रोपमालङ्कारः प्रतीयते व्यज्यते, तदाहु—'अत्रोपमा व्यङ्ग्ये'ति। अत्र च चन्द्रतारकातरलश्यामाशब्दाः परिवृत्त्यसहाः। पर्यायान्तरोपादानेऽपरार्थबोधासम्भवात्। अतन्द्राभरणसमुद्दीपितमन्मथशब्दाश्च परिवृत्तिसहाः अनिद्राभूषणसमुत्तेजितकामादिपर्यायान्तरैरपि तदर्थप्रतीतेरिति उभयशक्तिमूलत्वमिति।

**प्र० १३—निम्नोद्धृतपद्यानां ध्वनिभेदं प्रदर्श्य पद्यव्याख्यातप्रसङ्गेन भवन्मतं सोपपत्तिकं समर्थ्यताम्।**

**चतुर्थोल्लासे पद्यसंख्या ७४, ७६, ८०, ८१, ८४, ८७, ९१, ९९, १००, १०९, ११०।**

**उ० १३**—अत्र पद्यं ७४ यथा—

खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम्।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति॥

अस्य छायैवम्—'खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथा धीराणाम्ः
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति' इति॥

इदं पदं पदप्रकाश्यत्वे अविवक्षितवाच्यध्वनिभेदमत्यन्ततिरस्कृतवाच्यमुदाहरति। पद्यव्याख्यानन्त्वेवम्—

यद्यपि खलानां धूर्तानां शठानां व्यवहाराः चरितानि दारुणा दुःखदाः अन्येष्टप्रतिबन्धकाः दृश्यन्ते तथापि सदर्थग्राहितया हृदयमेव वयस्यः मित्रं तेन बहुमता अनुमोदिताः धीराणां महतां व्यवसायाः उद्योगाः खलु विमुह्यन्ति न प्रतिबद्धा भवन्तीत्यर्थः। यद्वा न विरामं प्राप्नुवन्तीत्यर्थः।

अत्र अचेतने व्यवसाये मुख्यो विमोहः बाधितः सन् कार्यकारणभावसम्बन्धात् प्रतिबन्धरूपं विरामरूपं वार्थं लक्षयति। तेन स सर्वथा इष्टकार्यकारित्वं व्यङ्ग्यम् लक्षणलक्षणाफलम्। तथा च विमुह्यन्तीति पदमत्यन्ततिरस्कृतवाच्यं सद् व्यञ्जकम्। अत्र विमुह्यन्तीति पदस्यैकस्यैव व्यञ्जकतेति पदप्रकाश्यत्वम्।

'उपकृतं बहु तत्र' इति पद्ये तु सर्वेषां पदानां व्यञ्जकत्वमिति तत्र वाक्य-प्रकारत्वमिति भेदः।

७६ पद्यं यथा—मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते,
मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना,
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति॥

न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता किं त्वन्येषामपीति ध्वनयन् अनेन पद्येनाह 'भोगेऽसंलक्ष्यक्रमध्वनिमुदाहरति—विदितरहस्या मानोपदेशं कुर्वाणा सखीजनवस्याः भर्तरि प्रणयविनयवत्याः नायिकायाः भङ्ग्यन्तरेण तां प्रत्युक्तिरियम्। हे मुग्धे उपदेशाग्राहिणि त्वयाऽखिलः समग्रः कालः मुग्धतयैव वक्रोक्तिलानाचरणेनैव मानचातुरीशून्यतयैव वा नेतुं यापयितुं किं किमिति आरभ्यते किंतु मानं धत्स्व धारय धैर्यं बधान प्रेयसि प्रियतमविषये ऋजुतां सरलतां त्यज दूरीकुरु। इत्येवं सख्या प्रतिबोधिता मुहुर्मुहुरुपदिष्टा अकृत्रिमानुरागा नायिका भीतानना भयजनितवैकल्यवद्वदना सती तां प्रतिबोधयन्तीं सखीं प्रतिवचः उत्तरमाह। उत्तरं दर्शयति—हे सखि त्वं नीचैर्मन्दं शंस कथय। हि यस्मात् प्राणेश्वरः प्राणानां तदायत्तत्वाज्जीवितसर्वस्वायमानः अतः एव मम हृदि हृदये स्थितो विद्यमानः श्रोष्यति आकर्णयिष्यति। ननु शङ्कायाम्। अत्र सख्या अपरिहार्यवाक्यतया नीचैः शंसनस्य विधानं कृतम्, मैवं शंसेति च प्राधान्योक्तम्। अत्र भीताननेति पदं नीचैः शंसनविधानस्य युक्ततां प्रकाशयत् प्राधान्येन स्वप्रतिपाद्याकृत्रिमानुरागेण रागातिशयं सम्भोगातिशयं वा (शृङ्गाररसं) व्यञ्जयतीत्यर्थः।

पद्यं ८०.८१ यथा—तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका॥

अत्र युग्मके स्वतःसम्भविना वस्तुना अलङ्कारस्य व्यक्तिमुदाहरति—इदं संलक्ष्यक्रमव्यङ्ग्यमर्थमूलकम्। अधुना पद्यस्य व्याख्यानं यथा—अन्या उक्ताभ्यो भिन्ना काचित् गोपकन्यका निरुच्छ्वासतया निरुद्धप्राणवायुतया परब्रह्मस्वरूपिणं

सच्चिदानन्दरूपं जगतः संसारस्य सूतिरुत्पत्तिः यस्मात्तादृशं श्रीकृष्णं चिन्तन्ती भावयन्ती सती मुक्तिं मोक्षं गता। कीदृशी तस्य कृष्णस्याप्राप्त्या वियोगेन यन्महादुःखं तेन विलीनानि नष्टानि अशेषाणि पातकानि यस्याः सा पुनः तस्य श्रीकृष्णस्य चिन्तया भावनया ध्यानेन यो विपुलो महान् आह्लादः आनन्दस्तेन क्षीणो नष्टः पुण्यस्य चयः समूहो यस्याः सा इति वाच्यार्थः। अत्र जन्मसहस्रैरुपभोग्यानि दुष्कृतसुकृतयोः फलानि वियोगदुःखचिन्तनाह्लादाभ्यां कयाऽप्यनुभूतानीत्युक्तम्। एवञ्च दुष्कृतसुकृतफलराशितादात्म्येनाध्यवसितौ भगवद्वियोगदुःखचिन्तनाह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषचयपदाभ्यां द्योत्यते।

पद्यं ८४ यथा--

राईसु चन्दधवलासु ललिअमप्फालिऊण जो चावम्।
एकच्छत्तं विअ कुणइ भुअणरज्जं विजंभंतो॥

अस्य छाया--रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः॥

अत्रार्थमूलसंलक्ष्यक्रमव्यङ्ग्ये कविप्रौढोक्तिमात्रनिष्पन्नशरीरे व्यञ्जकेऽर्थे वस्तु व्यज्यते। मानिनीं प्रति मानानिर्वाहः कठिनः इत्येतद्बोधिकासख्युरुक्तिरियम्।

व्याख्या--यः प्रकृतः स्मरः चन्द्रेण धवलासु उज्ज्वलासु रात्रीषु ज्योत्स्नीष्विति यावत्। ललितं सुकुमारमेव कुसुममयमेव (न तु कमठपृष्ठकठोरम्) चापं धनुः आस्फाल्यैव, न तु बाणादि संधाय भुवनानां राज्यम् एकमेव छत्रं यत्र तथाभूतमिव अद्वितीयमिवेति यावत् करोति। अत एव विजृम्भमाणः विस्फुरमाणः अतिसाहंकारतया वर्तमान इत्यर्थः। अत्र चापास्फालनेन एकच्छत्रमिव भुवनराज्यं करोतीति कविप्रौढोक्तिसिद्धेन वस्तुना स्वशासकानङ्गवारवश्येन कुशलैः कामिभिर्जागृद्भिः उपभोगपरैरेव निशाऽतिवाह्यते इति वस्तु भुवनराज्यपदेन प्राधान्येन व्यज्यते। 'कामिनाम्' इत्यत्र कामिन्यश्च कामिनश्चेति कामिनः। 'पुमान् स्त्रिया' इत्येकशेषः। न कोऽपि तदादेशपराङ्मुखः कामाज्ञाभञ्जकः आसीदिति हेतोः उपभोगपरैरुपभोगासक्तैरेव निशा नीयते इत्यर्थः। अखण्डाज्ञाविषयो हि साम्राज्यम्। अत्र भुवनराज्यपदस्य प्राधान्यात् पदप्रकाश्यता। 'कैलाशस्य प्रथमशिखरे' इत्यादौ तु नेदृशं किमपि पदमिति वाक्यप्रकाश्यतैवेति भेदः। अत्र 'एकच्छत्रमिव'

इवार्थः उत्प्रेक्षा सा च न व्यञ्जनोपयोगी, प्रत्युत तत्परित्यागेऽतिशयो गम्यते निर्धारितार्थप्रतीतेः।

अत्र वृत्तेर्व्याख्यानं यथा—असौ प्रजापालनपरो राजा स्मरः तेभ्यः तदर्थं कन्दर्पप्रजारूपकामुकप्रीत्यर्थमिति यावत्। तादर्थ्ये चतुर्थी। 'तेषु मध्ये' इति व्याख्यानं नातीव समीचीनम्। यतः कश्चिदपि स्त्री-पुरुषात्मको जनः विरक्तोऽपि तदादेशपराङ्मुखः कामाज्ञाभञ्जकः सुरतविमुखः नासीत् अत एव जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यते इति।

पद्यं ८७ यथा—

सो मुद्धसामलंगो धम्मिल्लो कलिअललिअणिअदेहो।
तीए खंधाहि बलं गहिअ सरो सुरअसंगरे जअइ॥

छाया-स मुग्धश्यामलाङ्गो धम्मिल्लो कलितललितनिजदेहः।
तस्याः स्कन्धाद् बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति॥

इत्थं कविप्रौढोक्तिमात्रसिद्धेनालङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति। पदस्य व्याख्यानम्-स धम्मिल्लः केशपाशः एव स्मरः कामस्तस्या नायिकायाः स्कन्धोऽशभागः एव स्कन्धः सेनानिवेशस्तस्माद् बलं सामर्थ्यमेव बलं सैन्यं गृहीत्वा सुरतसङ्गरे सुरतरूपे सङ्ग्रामे जयति सर्वोत्कर्षेण वर्तते। कीदृशः मुग्धं सुन्दरं श्यामलम् अङ्गं यस्य सः। कलितः पुनरापादितो ललितो मनोहरो निजदेहः स्वशरीरं धम्मिल्लरूपं येन सः। इति वाच्यार्थः।

तादृशस्य हि महापुरुषबुद्धया स्वकीयबलदानेन साहाय्यकमाचरन्ति लोका इति बोध्यम्। धम्मिल्लः स्मर इति रूपकम्। स्कन्धादिति बलमिति च श्लिष्टरूपके सुरतसङ्गरे इति रूपकम्। इति युद्धान्निवर्तमानमपि कश्चिद् कश्चिन्मित्रभूतोऽन्यतः स्कन्धावारात् बलं लब्ध्वा तं प्रोत्साहयति तथा अस्या नायिकायाः पूर्वसुरतवेलायां मुहुर्मुहुः कर्षणेन स्कन्धपतितकेशपाशः साक्षात्स्मर एव स्कन्धाद् बलं गृहीत्वा (लब्ध्वा) सुरतभोगनिवृत्तमपि मां मनःप्रोत्साहनेन सुरते प्रवर्तयतीति भावः। अत्र रूपकेणेति एकवचनं जात्यभिप्रायेणानेकेषां रूपकाणां सत्त्वात्। सुरतसङ्गरे इति धम्मिल्लः स्मर इति रूपकालङ्काराभ्यामित्यर्थः। धम्मिल्लस्य स्कन्धसम्बन्धेन शोभातिशयलाभात् स्कन्धपदस्य प्राधान्यम्। तथोपर्युक्तरूपकाभ्यां रत्यनिष्पत्तिरूपाभिलाषहेत्वभावेऽपि अभिलाषोदयात् विभावनाऽलङ्कारो व्यज्यते।

रतिनिष्पत्तिश्च स्कन्धपदेनैव द्योतिता। आकर्षणेन हि धम्मिल्लस्य स्कन्धप्राप्तेः प्रायशो रतिनिष्पत्तिं विनाऽसम्भवात्। अत्र रूपकं स्वतोऽसम्भवीति कविप्रौढोक्तिमात्रसिद्धम्।

पद्यं ९१ यथा—

विहलंखलं तुमं सहि दट्ठूण कूडेण तरलतरदिट्ठिम्।

वारप्फंसमिसेण अ अप्पा गुरुओत्ति पडि अ विहिण्णो॥

अस्य छाया–विश्रृङ्खलां त्वां सखि दृष्ट्वा कूटेन तरलतरदृष्टिम्।

द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभिन्नः॥

अत्र पद्यं कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेनालङ्कारेण वस्तुनो व्यक्तिमुदाहरति। व्याख्यानं पद्यस्य यथा—नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशसमये पश्चादागच्छन्तं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन घटं स्फोटितवतीं नायिकां प्रति सख्याः–'त्वदभिप्रायाऽवगतो मया तस्मात् समाश्वासं विधाय समीहितसिद्धये व्रज। अहं त्वच्छ्वश्र्वादिनिकटे सर्वं समाधास्ये' इत्यभिप्रायगर्भा अविदग्धजनप्रतारणायोक्तिरियम्। हे सखि विश्रृङ्खलामिति भारवशात् विकलां व्याकुलां वा अत एव तरलतरदृष्टिम्। अतिशयितचञ्चलदृष्टिं त्वां दृष्ट्वा कुटेन घटेन (कर्त्रा) आत्मा स्वरूपं घटव्यपदेश्यः कम्बुग्रीवादिमान् मृन्मयो देह इति यावत् गुरुकः गरीयान् इति त्वादृश्याः अपि कष्टदायक इति दुःखेनेति भावः। द्वारस्पर्शस्य मिषेण व्याजेन पातयित्वा विभिन्नः स्फोटित इत्यर्थः। अन्तर्भावितण्यर्थोऽयम्। नायं द्वारस्पर्शात् घटनाशस्त्वया कृतः किन्तु गुरुतया परपीडकत्वात् घटेनैव स्वात्मा विभेदितः इत्यपह्नुत्यलङ्कारः। विश्रृङ्खलां कामपरवशामिति हृदि स्थितोऽर्थः। वृत्तेर्व्याख्यानं तु 'गृहप्रवेशावसरे गृहप्रवेशसमये आगतं कामुकं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलया त्वया घटः स्फोटित अत्रैव बुद्धिपूर्वं विभेदितः' इति मया चिन्तितमवगतम्। तत् तस्मात् व्रज गच्छ। अत्रोपरिप्रदर्शितापह्नुत्यलङ्कारे त्वदभिप्रायोऽवगतो मया, तत्समाश्वासं विधाय समीहितसिद्धये व्रज अहं त्वच्छ्वश्रूनिकटे सर्वं समर्थयिष्ये, इति वस्तुनः वारप्फंसमिसेनेत्ति पदप्राधान्यात् पदप्रकाश्यता। अत्राचेतने घटे स्वात्माविभेदनरूपचेतनधर्मारोप इति तन्मूलकतयाऽपह्नुते प्रौढोक्तिसिद्धत्वम्।

पद्यं ९९ यथा—

पथि पथि शुकचञ्चूचारुरामाङ्कुराणां दिशि दिशि पवमानो वीरुधां लासकश्च।

नरि नरि किरति द्राक् सायकान् पुष्पधन्वा पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥

अत्र प्रत्ययरूपपदैकदेशयोः तिङ्सुपोः सम्भोगशृङ्गारस्य व्यक्तिमुदाहरति पद्यव्याख्यानं यथा-वसन्तवर्णनमिदम् । पथि-पथि प्रतिमार्गम् अङ्कुराणां नूतन-प्ररोहाणाम् आभा कान्तिः शुकचञ्चूनामिव चारुर्मनोहरा ( अस्ति )। एवं दिशि दिशि प्रतिदिशं वीरुधां लतानां लासको नर्तकः पवमानो वायुश्चास्ति । आभ्यां च वाक्याभ्यां नूतनाङ्कुरशोभाशालिवसन्ततुंसर्वदिक्सञ्चारिमन्दमारुतयोरुद्दीप-कयोः सम्पत्तिरुक्ता । तत्कार्यमाह—नरि नरीति । नरि नरि प्रतिपुरुषं पुष्पं धनुर्यस्य स पुष्पधन्वा कामः द्राग् झटिति सायकान् पञ्चापि बाणान् किरति क्षिपतीत्यर्थः । ( एवं कामोद्दीपने सति ) पुरि पुरि प्रतिनगरं मानिनीनां मानवतीनां स्त्रीणां मानस्य चर्चा वार्ता प्रसङ्गो वा विनिवृत्ता विशेषेण निवृत्ता गतेत्यर्थः । अत्र नरि नरि पुरि पुरि इत्येतयोः स्थानाख्यप्रमाणेन एकैकस्यां पुरि एकैकस्मिन् नरि सायकपातेन सम्पूर्णनगरे त्रासात् सर्वासां मानभङ्गतया पुरुषेषु बाणपातेन मानधनाभिः स्त्रीभिरपि मानस्त्यक्त इति अतीवाखण्डाज्ञा-शालित्वं मन्मथस्य द्योत्यते । अत्र किरतीति तिङ् । किरणस्य साध्यत्वम् तिङ्योगे व्यञ्जनया साध्यतयैव वाक्यार्थोपस्थितेः निवृत्तेति सुप्प्रत्ययेन निवृत्ते सिद्धत्वम् सुब्योगे व्यञ्जनया तथैव प्रकृत्यर्थप्रतीतेः । तत्र सिद्धत्वेऽपि 'क्त'प्रत्ययेन अतीतत्वं व्यज्यते इति । किरणनिवृत्त्योः पौर्वापर्यविपर्ययरूपातिशयोक्त्य-लङ्कारप्रकाशो रसोत्कर्षे पर्यवस्यति तथा च किरतीति वृत्तेति तिङ्सुपोः प्रत्ययात्मकपदैकदेशयोः क्रमेण प्रत्ययार्थगतसाध्यत्वसिद्धत्वाभिव्यक्तिद्वारा रत्यु-द्दीपनातिशयपर्यवसानात् । प्राधान्यम् । माननिवृत्तौ शरकिरणं तस्य सिद्धत्वे वक्तव्ये किरतीति तिङ्प्रत्ययेन साध्यत्वोक्तिः । माननिवृत्तौ च कार्यभूतायां साध्यत्वे वक्तव्ये सिद्धत्वोक्तिस्तथा च किरणानिवृत्त्योः कारणकार्यभूतयोः पौर्वा-पर्यविपर्ययात् कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्त्यलङ्कारप्रकाशः । स च निवृत्तेः शीघ्रत्वबोधनद्वारा वसन्तस्योद्दीपकातिशयाभिव्यक्तेः रसोत्कर्षे पर्यवस्यति इति 'क्त' प्रत्ययेनातीतत्वं शक्त्या बोध्यते तेनोत्पन्नस्वरूपं सिद्धत्वं व्यङ्ग्यम् । तथा च प्रकृत्या प्रत्यायितस्याऽप्यतीतत्वस्य पुनः कृत्यप्रत्ययेन प्रत्यायनमतिशयावगमाय ।

पद्यं १०० यथा—लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो ।

निराहाराः सख्यः सततरुदितोच्छूननयनाः ॥

परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥

अत्र प्रत्ययरूपपदैकदेशेषु सुप्तिङ्विशेषेषु विप्रलम्भशृङ्गारस्य व्यक्तिमुदाहरति । हे कठिने निर्दये तव प्राणानां दयितः प्रियः । तेन दयितदुःखेन त्वत्प्राणा अपि दुःखिता भविष्यन्तीति ध्वन्यते । यदा तव प्राणा इव सोऽस्माकं दयितः तथा च त्वत्प्राणा इव सोऽप्यस्माकं रक्षणीय इति भावः । ईदृशोऽपि अवनतः नम्रः भूमिं न तु भूमौ । तेनाकाङ्क्षितस्य कर्मणः अनुद्देश्यत्वं ध्वन्यते । लिखन् शून्यहृदयतया । विलिखन् न तु लिखतीति । तेन नायकस्याबुद्धिपूर्वकत्वरूपाप्राधान्यं ध्वन्यते । बहिः बाह्यदेशे न तु गृहमध्ये । तेन नायकस्यात्युद्वेगो ध्वन्यते । तथा सख्यः सर्वाः वयस्या निर्गतः आहारो यासां तथाभूताः सत्यः सततं निरन्तरं यद् रुदितं तेनोच्छूने जातशोके नयने चक्षुषी यासां तथाभूता । सन्तीति शेषः । तथा पञ्जरस्थैः शुकैः कीरैः हसितं हसनं पठितं पठनम् । अन्यच्च सर्वं शरीरधारणोपयोगि भोजनादिकमपि परित्यक्तम्, उज्झितम् अज्ञानामपीदृश्यवस्था किं पुनरस्माकमिति भावः पञ्जरेत्यनेनान्यत्र गमनासामर्थ्यं व्यज्यते शुकेत्येकवचनं न कृतम् । एकस्य शिक्षादिनापि तथा ज्ञानसम्भवात् । तव चेयमुत्तरोत्तरवर्धमानासह्यपीडाजनिका अवस्था दशा । जातेति शेषः । अतः अधुना वसन्तचन्द्रिकादिभिरुद्दामे मन्मथविलासते सतीत्यर्थः । मानं विसृज विशेषेण त्यजेत्यर्थः । अत्र लिखन्नित्युक्तं न तु लिखतीति तेन शतृप्रत्ययेन लिखनस्याप्राधान्यमबुद्धिपूर्वकत्वरूपम् । आस्ते इत्युक्तं न त्वासीदिति । तेन यथाव्यवधानस्य प्रसादपर्यन्तां तिङ्विभक्त्या व्यज्यते । भूमिमित्युक्तं न तु भूमाविति तेन बुद्धिपूर्वकं भूमौ किञ्चिन्न लिख्यते इति सुब्विभक्त्या व्यज्यते । तेन व्यङ्ग्येन नायकस्य मोहातिशयो व्यज्यते तेन च विप्रलम्भोत्कर्षो व्यङ्ग्य इति भावः ।

पद्यं १०९ यथा—

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिपरा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

पदैकदेशरचनावर्णेष्वपि रसादयः इति यदुक्तं तत्र तेषां बहूनां रसव्यञ्जकत्वम् । अत्र पद्यं बहूनां वीररसव्यञ्जकत्वमुदाहरति । तस्य व्याख्यानम् . राघवानन्दनाटके रावणमुद्दिश्य विभीषणोक्तिरियम् । रामः सकलभुवनमनोरमणः एतेन सर्वे तद्धितकारिण इति व्यज्यते । असौ खरदूषणादिनिहन्तृत्वेनातिप्रसिद्धः विलक्षण-धैर्यगाम्भीर्यादिशाली च भावनया प्रत्यक्षायमाणश्च । विक्रमगुणैरिति । केवलं प्रसिद्धिं प्राप्त इत्युक्तौ सदोषगुणैरपि प्रसिद्धिसम्भवः यथा सम्बोध्यरावणस्य । तन्निवृत्त्यर्थं गुणैरिति । न केवलं गुणैः अपि तु विक्रमजैः । एतेन सीता दानास्या-वश्यकत्वं व्यज्यते । सापि ( प्रसिद्धिरपि ) न ग्रामे न नगरे नापि भवने किं तु भुवनेषु, तेष्वपि न कृशां किं तु पराम् । तेनाज्ञातत्वनिरासः । यद्वा विक्रमगुणैः प्रकृष्टां सिद्धिं जयलक्षणां भुवनेषु प्राप्त इत्यर्थः । एतेन सर्वथाऽपि युद्धेऽजेयत्वं व्यज्यते । तमपि यद् देवो दिव्यज्ञानवानपि भवान् न जानाति तद् अस्माकं भाग्यस्य विपर्ययादेव अन्यथा विपरिणामादेव न तु त्वद्भाग्यविपर्ययात् त्रैलोक्यनाथतादृश-महापुरुषहस्तेन मरणेऽपि मोक्षलक्ष्मीविलासलाभेन तस्यापि भाग्यफलत्वाद् अस्माकं पुनः चिरकालजीवितानां त्वादृशप्रभुविपद्दर्शनात् त्वद्वियोगाच्च निरन्तरदुःखदा-वानलपच्यमानानां परं भाग्यविपर्ययः । यदि परमिति निपातसमुदायोऽवधार-णार्थः । अत्र भाग्यविपर्ययादित्युक्तं न तु अभाग्यादिति । तेन त्वादृशप्रभुलाभात् सार्वत्रिकातिशयसुखलाभेनाभाग्यविरहेऽनुमितेऽपि भाग्यान्येव विपरीतफलत्वेन परिणतानीति ध्वनिः । अस्मदित्यनेन समस्तरक्षकुलस्यैव तथात्वं प्रतीयते । प्रसिद्धिहेतुभूतं विक्रमगुणोदाहरणमाह—वन्दीति । एवं मरुद् वायुः वन्दीव वैता-लिक इव सप्तभिः स्वरैः षड्जादिभिः यस्य रामस्य यशांसि गायतीवेत्युत्प्रेक्षा-गर्भम् । सप्तस्वराश्चोक्ताः 'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥' इति । कीदृशैः स्वरैः । एकबाणहत्याजातानि यानि श्रेणीभूतविशालतालानां विवराणि रन्ध्राणि तैः उद्गीर्णाः प्रकाशितास्तैस्तथा-भूतैरित्यर्थः ।

अत्रासाविति सर्वनाम्ना भुवनेष्वति गुणैरिति उभयत्रैव प्रातिपदिकबहुवच-नयोः, अस्मादिति सर्वाक्षेपिणो, भाग्यविपर्ययादिति अन्यथाविपरिणाममुखेनाभि-धानस्य च वीररसव्यञ्जकत्वं सहृदयवेद्यम् । अन्यथासम्पत्तिः दुर्भाग्यरूपेण परिण-

मनम् । न त्वभाग्यादिति अभावमुखेन । अतस्तथाविधेनाभाग्यविरहेऽपि भाग्यान्येव तादृशत्वेन परिणतानीति व्यज्यते । पद्यं ११० यथा—

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ।।

बहूनां शृङ्गाररसव्यञ्जकत्वमुदाहरति । इयमेषा चकितस्य भीतस्य हरिणस्य मृगस्य चले चञ्चले नयने इव नयने यस्याः सा यद्वा चकितस्य हरिणस्येव चले नयने यस्या इति अपि विग्रहः । तथाभूता नायिका सकलललनानां मौलि-मधिवसति । 'उपान्वध्याङ्वसः' सूत्रेणाधारस्य कर्मसंज्ञा सर्वसुन्दरीशिरसि तिष्ठतीत्यर्थः । स्त्रीमात्रचूडामणित्वं प्राप्नोतीति यावत् । कस्मिन्सति । तरुणि-मनि तारुण्ये कलां कटाक्षविक्षेपादिरूपां कलयति शिक्षयति सति अर्थान्नायिकायै । यद्वा तरुणिमनि कलामुपचयं ( वृद्धि ) कलयति प्राप्नवति सतीत्यर्थः । पुनः कस्मिन् सति भ्रूलताग्रे अनुमदनधनुः मदनधनुषः कामचापस्य समीपे पठति सति अर्थात्कला: । अत्र चकितेत्यनेन चक्षुषोश्चाञ्चल्यातिशयो व्यज्यते । वृत्तेर्व्याख्यानं यथा—

अत्र इमनिच्प्रत्ययाव्ययीभावसमासकर्मभूताधाराणां शृङ्गारव्यञ्जकत्वं दर्श-यति अत्रेमनिजित्यादिना तरुणिमनि इति 'इमनिच्' प्रत्ययः । अनुमदनधनुरित्य-व्ययीभावः । मौलिमिति कर्मभूताधारस्तेषामित्यर्थः । स्वरूपस्येति । शृङ्गारव्य-ञ्जकत्वमिति शेषः । तदेवाह—तरुणत्वे इति । एषाम् इमनिजादीनां वाचकत्वे त्वादि-भिस्त्वप्रत्ययादिभिस्तुल्येऽपि अस्ति कश्चित्स्वरूपस्य विशेषः इति । श्रुतिकत्वादि-हीनो माधुर्यादियुक्तो वचनागोचरः सहृदयसंवेद्य इत्यर्थः । यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोतीति । अयं भावः—इमनिचा तद्धितेन सुकुमाराक्षरेण तादृश-मेव नवं वयः प्रतीयते । तरुणत्वे इत्युक्तौ तु प्रत्ययस्य प्रौढाक्षरतया वयसोऽपि प्रौढत्वं प्रतीयेत । अनुमदनधनुरिति पूर्वपदार्थप्रधानाव्ययीभावेन उत्तरपदार्थीभूत-धनुषोऽप्राधान्यं प्रकटयता तन्निरपेक्षं वशीकरणसामर्थ्यं भ्रूलताग्रस्य प्रत्याय्यते । तथा मौलिमिति कर्मप्रत्ययेन कर्मीभूतसकलललनामौलिव्याप्तिसूचनद्वारा सौन्द-र्यातिशयो व्यज्यते । मौलौ इत्युक्ते तु आधारस्यैकदेशवृत्तिताया अपि सम्भवाद्व्या-प्तिर्न प्रतीयेत । एवम् इमनिजादीनामेवोक्तव्यङ्ग्यव्यञ्जनद्वाराशृङ्गाररस-व्यञ्जकत्वमिति ।

अस्योल्लासस्य सर्वोऽयं विषयः कोष्ठरूपेण प्रदर्श्यते—
रसा नव सन्ति नवैव च तेषां स्थायिभावः । तद्यथा—

| रसनाम | स्थायिभावः | उदाहरणम् | |
|---|---|---|---|
| १. शृङ्गारः (क) सम्भोगः | रतिः | शून्यं वासगृहं | ॥ ३० ॥ |
| (ख) विप्रलम्भः १. अभिलाषहेतुकः | ,, | प्रेमार्द्राः प्रणय | ॥ ३२ ॥ |
| २. विरहहेतुकः | ,, | अन्यत्र व्रजतीति | ॥ ३३ ॥ |
| ३. ईर्ष्याहेतुकः | ,, | सा पत्युः प्रथमा | ॥ ३४ ॥ |
| ४. प्रवासहेतुकः | ,, | प्रस्थानं वलयैः | ॥ ३५ ॥ |
| ५. शापहेतुकः | ,, | त्वामालिख्य | ॥ ३६ ॥ |
| २. हास्यम् | हासः | आकुञ्च्य पाणिं | ॥ ३७ ॥ |
| ३. करुणः | शोकः | हा मातस्त्वरिता | ॥ ३८ ॥ |
| ४. रौद्रः | क्रोधः | कृतमनुमतं दृष्टं | ॥ ३९ ॥ |
| ५. वीरः | उत्साहः | क्षुद्राः सन्त्रासमेते | ॥ ४० ॥ |
| ६. भयानकः | भयम् | ग्रीवाभङ्गाभिरामं | ॥ ४१ ॥ |
| ७. बीभत्सः | जुगुप्सा | उत्कृत्योत्कृत्य कृत्तिं | ॥ ४२ ॥ |
| ८. अद्भुतः | विस्मयः | चित्रं महानेष बताव | ॥ ४३ ॥ |
| ९. शान्तः | निर्वेदः शमो वा | अहौ वा हारे वा | ॥ ४४ ॥ |

भावादीनां लक्षणमुदाहरणं च ।
निम्नलिखितकोष्ठे द्रष्टव्यम्—

| भावनाम | लक्षणम् | उदाहरणम् |
|---|---|---|
| १. भावः | रतिर्देवादिविषया | कण्ठकोणविनिष्टनाश ॥४५॥ |
| (क) देवविषया रतिः | | जाने कोपपराङ्मुखी ॥४७॥ |
| (ख) अङ्गिव्यभिचारी | ,, | स्तुमः कं वामाक्षि ॥४८॥ |
| २. रसाभासः | तदाभासा अनौचित्यप्रवर्तिताः | राकासुधाकरमुखी ॥४९॥ |
| ३. भावाभासः | ,, | तस्याः सान्द्रविलेपन ॥५०॥ |
| ४. भावशान्तिः | भावस्य शान्तिः प्रशमः | एकस्मिन् शयने ॥५१॥ |
| ५. भावोदयः | भावस्योदयः | क्वाकार्यं शशलक्ष्मणः क्व च |
| ६. भावशबलता | भावानां शबलता पूर्वपूर्वोपमर्दन परस्परोदयः | उत्सिक्तस्य तपः पराक्रम- |
| ७. भावसन्धिः | भावयोरेककालमेव तुल्यकक्षयोरास्वादः समकालमेव विरुद्धयोरपि तुल्यरूपयोरास्वादो वा | निधेरभ्यागमादेकतः ॥५२॥ |

ध्वनेर्भेदा उदाहरणानि च यथा—

| ध्वनिर्भेदाः | उदाहरणानि |
|---|---|
| १. अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः | त्वामस्मि वाचम् विदुषाम् ॥ २३ ॥ |
| २. अत्यंततिरस्कृतवाच्यः ,, | उपकृतं बहु तत्र किमुच्यते ॥ २४ ॥ |
| ३. असंलक्ष्यक्रमव्यङ्ग्यः ,, | शून्यं वासगृहं विलोक्य ॥ ३० ॥ |
| ४. शब्दशक्तिमूलकालङ्कारस्य ,, | उल्लास्य कालकरवाल ॥ ५४ ॥ |
| ५. शब्दशक्तिमूलकवस्तुनः ,, | पथिक ! नात्र स्त्रस्तरमस्ति ॥ ५८ ॥ |
| ६. स्वतः सम्भविना वस्तुना वस्तुनो व्यक्तिः | अलसशिरोमणिधूर्त्तानाम् ॥ ६० ॥ |
| ७. ,, ,, ,, अलङ्कारस्य ,, | धन्याऽसि या कथयसि ॥ ६१ ॥ |
| ८. ,, ,, अलङ्कारेण वस्तुनः ,, | दर्पान्धगन्धगजकुम्भकपाट ॥ ६२ ॥ |
| ९. ,, ,, ,, अलङ्कारस्य ,, | गाढकान्तदशनक्षतव्यथा ॥ ६३ ॥ |
| १०. कविप्रौढोक्तिसिद्धेनवस्तुना वस्तुन,, | कैलासस्य प्रथमशिखरे ॥ ६४ ॥ |
| ११. ,, ,, अलङ्कारस्य ,, | केशेषु बलात्कारेण तेन च ॥ ६५ ॥ |
| १२. कविप्रौढो० अलङ्कारेण वस्तुनः ,, | गाढालिङ्गनरभसोद्यते ॥ ६६ ॥ |
| १३. ,, ,, अलङ्कारस्य ,, | या स्थविरमिव हसती |
| १४. कविनिबद्धवक्तृप्रौढो० वस्तुना वस्तुनः ,, | ये लङ्कागिरिमेखलासु ॥ ६८ ॥ |
| १५. ,, ,, अलङ्कारस्य ,, | सखि ! विरचय्यमानस्य ॥ ६९ ॥ |
| १६. ,, अलङ्कारेण वस्तुनः ,, | आर्द्रार्द्रकरजरदनखक्षतैस्तव ॥ ७० ॥ |
| १७. ,, अलङ्कारस्य ,, | महिलासहस्रभरिते तव ॥ ७१ ॥ |
| १८. शब्दार्थोभयशक्तिमूलो ध्वनिः ,, | अतन्द्रचन्द्राभरणा ॥ ७२ ॥ |
| १९ पदप्रकाश्योऽर्थान्तरसंक्रमितवाच्यः ,, | यस्य मित्राणि मित्राणि ॥ ७३ ॥ |
| २०. ,, अत्यन्ततिरस्कृतवाच्यः ,, | खलव्यवहारा दृश्यन्ते ॥ ७४ ॥ |
| २१. ,, अलक्ष्यक्रमव्यङ्ग्यः ,, | लावण्यं तदसौ कान्तिः ॥ ७५ ॥ |
| २२. ,, वस्तुनोऽलङ्कारस्य व्यक्तिः | रुधिरविसरप्रसाधित ॥ ७७ ॥ |
| २३. ,, ,, वस्तुनः ,, | भुक्तिमुक्तिकृदेकान्त ॥ ७८ ॥ |
| २४. ,, स्वतः सम्भविना व० व० ,, | सायं स्नानमुपासितम् ॥ ७९ ॥ |
| २५. ,, ,, ,, अलङ्कारस्य ,, | तदप्राप्तिमहादुःखविलीना ॥ ८० ॥ |
| २६. ,, ,, अलङ्कारेण वस्तुनः ,, | क्षणदाऽसावक्षणदा ॥ ८२ ॥ |
| २७. ,, ,, ,, अलङ्कारस्य ,, | तव वल्लभस्य प्रभाते ॥ ८३ ॥ |
| २८. ,, कविप्रौढोक्तिसिद्धेन व० व०,, | रात्रीषु चन्द्रधवलासु ॥ ८४ ॥ |
| २९. ,, ,, ,, अलङ्कारस्य ,, | निशितशरधियाऽर्पयत्यनङ्गो ॥ ८५ ॥ |
| ३०. ,, ,, ,, अलङ्कारेण वस्तुनः ,, | वार्यमाणोऽपि पुनः सन्ताप ॥ ८६ ॥ |

| ध्वनेर्भेदाः | उदाहरणानि |
| --- | --- |
| ३१. ,, ,, ,, अलङ्कारस्य ,, | स मुग्धश्यामलाङ्गो धम्मिल्लः ॥८७॥ |
| ३२. ,, कविनिबद्धवक्तृप्रौढ०व०व०,, | नवपूर्णिमामृगाङ्कस्य ।८८॥ |
| ३३. ,, ,, ,, अलङ्कारस्य ,, | सखि ! तव निधुवनसमरे ॥८९॥ |
| ३४. ,, अलङ्कारेण वस्तुनः ,, | प्रविशन्ती गृहद्वारम् ॥९०॥ |
| ३५. ,, ,, ,, अलङ्कारस्य ,, | ज्योत्स्ना मधुरसेन च ॥९२॥ |
| ३६. प्रबन्धेऽर्थशक्तिमूलो ध्वनिः ,, | अलं स्थित्वा श्मशानेऽस्मिन् ॥९३॥ |
| ३७. धातुरूपपदैकदेशे रसस्य ,, | रतिकेलिहृतनिवसनकर० ॥९७॥ |
| ३८. नामरूपपदैकदेशे ,, ,, | प्रेयान् सोऽयमदाकृतः ॥९८। |
| ३९. प्रत्ययरूपपदैकदेशे ,, ,, | पथि पथि शुकचञ्चुचारु० ॥९९॥ |
| ४०. संशयास्पदध्वनिद्वयसङ्करः ,, | क्षणप्राघुणिका देवरजायया ॥१११॥ |
| ४१. अनुग्राह्योऽनुग्राहकैकव्यञ्जकानुप्रदेशरूपौ सङ्करौ संसृष्टिश्च | स्निग्धश्यामलकान्तिलिप्त ॥११२॥ |

## ध्वनेः परिगणनम्

१ लक्षणामूलक।

अविवक्षित १

१ अर्था.
- १ पद
- २ वाक्य

२ अत्यन्त—
- १ पद
- २ वाक्य

४

२ अभिधा

विवक्षित २

१ असं.
- पद १
- वाक्य २
- प्रबन्ध ३
- पदैकदेश ४
- रचना ५
- वर्ण ६

संलक्ष्य

१ शब्द

२ अर्थ

१ उभय०

वाक्य १

| | | | | |
|---|---|---|---|---|
| वस्तु १ | स्वतः० | कविप्रौ० | कविनि० | |
| अलं २ | वस्तुना वस्तु | १ व० व० | १ व० व० | १ |
| पदं ३ | वस्तुनालंकारः | २ व० अलं० | २ प० अलं० | २ |
| वाक्य ४ | अलंकारेण वस्तु | ३ अलं० व० | ३ अलं० वस्तु | ३ |
| | अलंकारेणालंकारः | ४ अलं० अलं० | ४ जलं० अलं | ४ |

| | | | |
|---|---|---|---|
| | ४ | ४ | ४ |
| पदवाक्यप्रबन्ध | ३ | ३ | ३ |
| | १२ | १२ | १२ |

| | |
|---|---|
| स्वतः | १२ |
| कविप्रौ. | १२ |
| कविनि. | १२ |
| | ३६ |
| अविवक्षित० | ४ |
| असं० | ६ |
| शब्द० | ४ |
| उभय० | १ |
| | ५१ |
| अन्योन्ययोजने | ५१ |
| | २६०१ |
| त्रिरूपेण संकरेण गुणने | ३ |
| | ७८०३ |
| एकरूपया संसृष्ट्या | २६०१ |
| | १०४०४ |
| | ५१ |
| सकलभेदाः | १०४५५ |

इति चतुर्थोल्लासः ।

—: ❀ :—

# अथ पञ्चमोल्लासः

प्र० १—सोदाहरणा गुणीभूतव्यङ्ग्यभेदा लेख्याः ।

उ० १—अगुणं गुणं भूतमिति गुणीभूतं गुणीभूतञ्च तद् व्यङ्ग्यञ्चेति गुणीभूतव्यङ्ग्यम् । गुणपदेनात्र गौणं बोध्यम् । यत्र वाच्यार्थादधिकचमत्कारि व्यङ्ग्यं न भवेत्तत्र गुणीभूतव्यङ्ग्यमिति व्यवहारः । तस्य निम्नाष्टौ भेदाः सन्ति ।

| व्यङ्ग्यभेदाः | उदाहरणानि | व्यङ्ग्यभेदाः | उदाहरणानि |
|---|---|---|---|
| १. अगूढव्यङ्ग्यम् | | | |
| (क) अर्थान्तरसं. | यस्मात्सुहृत्कृत. | ४. अस्फुटम् | अदर्शने दर्शनोत्कण्ठा |
| (ख) अत्यन्ततिर. | उन्निद्रकोकनद. | ५. सन्दिग्धप्राधान्यम् | हरस्तुकिञ्चित्परिलुप्त |
| (ग) अर्थशक्तिम् | अत्रासीत् फणिपाश. | ६. तुल्यप्राधान्यम् | ब्राह्मणातिक्रमत्यागः |
| २. अपरस्याङ्गम् | अयं स रशनोत्कर्षी. | ७. काक्वाक्षिप्तम् | मथ्नामि कौरवशतम् |
| ३. वाच्यसिद्ध्यङ्गम् | भ्रमिमरतिमल | ८. असुन्दरम् | वानीरकुञ्जोड्डीन. |

प्र० २—गुणीभूतव्यङ्ग्यस्याष्टासु भेदेषु द्वितीयस्य 'अपरस्याङ्गम्' इत्याख्यस्य भेदस्य स्वरूपं, लक्षणं सप्रपञ्चं सोदाहरणं निपुणं निरूप्यताम् ।

उ० २—अपरस्याङ्गमिति द्वितीयभेदं विवृणुमः । अपरस्य रसादेः इत्यादिवृत्तिगतस्य व्याख्यानमेवम्—अपरशब्दार्थमाह—रसादेर्वाच्य वा ( वाक्यार्थीभूतस्येति ) । रसादेरित्यत्रादिपदेन भाव-रसाभास-भावाभास-भावशान्ति-भावोदय-भावसन्धि-भावशबलतारूपस्यासंलक्ष्यक्रमस्य च ग्रहणम् । वाच्यस्य वाच्यार्थस्य कीदृशस्य रसादेर्वाच्यस्य वेत्याकाङ्क्षायामाह—वाक्यार्थीभूतस्येति । वाक्यतात्पर्यविषयतया प्रधानस्येत्यर्थः एवं चासंलक्ष्यक्रमम्, संलक्ष्यक्रमं, वाच्यवस्तु चेति त्रिविधोऽत्रापरशब्दार्थः । अत एव अपरस्याङ्गम् अपरस्य रसादेः त्वनैकपेक्ष्येण लब्धसिद्धेरुपकारकम् । तत्र रसपदम् असंलक्ष्यक्रमोपलक्षणम् । आदिना लक्ष्यक्रमस्य वाक्यवस्तुनश्च सङ्ग्रहः । एतेषां प्रधानानाम् मध्ये रसभाववाक्यरूपस्य त्रिविधस्यैव प्राधानस्योदाहरणानि मूलकृताऽग्रे प्रदर्शितानि । रसाभासाद्यलक्ष्यक्रमरूपस्य, संलक्ष्यक्रमरूपस्य च प्रधानस्योदाहरणानि सुधीभिः स्वयमूह्यानि । अङ्गम् उपकारकम् उत्कर्षकमिति यावत् । रसादीति । असंलक्ष्य-

क्रमरूपमित्यर्थः। निष्पन्नरसभावस्याङ्गत्वाभावात्। रसपदमत्र स्थायिभावपदम् अनुरणनरूपमिति संलक्ष्यक्रममित्यर्थः। एवञ्चासंलक्ष्यक्रमम् अनुस्वानाभसंलक्ष्यक्रममिति द्विविधम् अपराङ्गं व्यङ्ग्यम्। रसस्य वाच्याङ्गत्वम् दशमोल्लासे उदात्तालङ्कारवर्णने महतां चोपलक्षणमित्यत्र तदिदमरण्यं० इत्युदाहरणे प्रदर्शयिष्यते।

अधुना रसस्य रसाङ्गतायामपरस्याङ्गं मध्यमकाव्यमुदाहरति—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥ इति॥

महाभारते स्त्रीपर्वणि चतुर्विंशेऽध्याये रणभूमिपतितं भूरिश्रवसश्छिन्नं हस्तमादाय तद्वधूप्रलापोक्तिरियम्। अयं सः पूर्वानुभूतरशनोत्कर्षणादितत्तच्छृङ्गारावस्थः अधुना दृश्यमानदुरवस्थः करः हस्तः रशनायाः काञ्च्या उत्कर्षी आकर्षकः तथा पीनयोः पुष्टयोः स्तनयोः विमर्दनः विमर्दकारी। नाभिश्च ऊरू च जघनं चैतानि स्पृशति तच्छीलः नीव्याः नाभितलवसनग्रन्थेः विस्रंसनः मोचकः इति वाच्यार्थः।

अत्र किं कस्याङ्गमित्याकाङ्क्षायामाह—शृङ्गारः करुणस्येति। शृङ्गारः नायिकाविषयो नायकाश्रयः तस्यैव नायिकाशोकप्रकर्षकत्वात् करुणस्य नायिकाश्रयस्यांगम्। एवं चात्र भूरिश्रवसश्छिन्नं हस्तमासाद्य तद्वधूनां प्रलापे शृङ्गारोचितरशनाकर्षित्वादिविलासस्मरणं विगलद्धृदयत्वाच्छोकवेगमधिकमुत्पादयतीति शृङ्गारस्य करुणपोषकत्वाच्छृङ्गारः करुणस्याङ्गमिति वृत्त्यर्थः। अत्र करुणरस एव प्रधानम् शोकस्योल्वणतया करुणस्यैवास्वादगोचरत्वात्। शृङ्गारस्त्वङ्गम् प्राग्वृत्तशृङ्गारोचितरशनाकर्षणादिविलासस्मरणस्य शोकपोषकत्वात्। अतिप्रियनाशे शोकातिशयदर्शनात्। एवञ्च करुणमादायास्य काव्यस्य ध्वनित्वम्। शृङ्गारस्याङ्गिनमादाय गुणीभूतव्यंग्यत्वमिति ज्ञेयम्। शोकावेशादेव शृङ्गारोऽपुष्टः। निष्पन्नस्य रसस्यापराङ्गत्वामात्राद् रसपदेनात्र रस्यते आस्वाद्यते इति व्युत्पत्त्या स्थायिभावो द्रष्टव्यः। अत्र रसवदलङ्कारः रसस्याङ्गत्वात्।

रसस्य भावाङ्गतायामपराङ्गव्यङ्ग्यमुदाहरति। कैलासेति—

कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।

स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ।।

प्रणतिपरे भगवति भवे भवान्याः मानभङ्गेन नेत्रारुण्यनाशवर्णनमिदम् । गिरिभुवः पार्वत्याः सा पादनखानां द्युतिः कान्तिः वः युष्मान् सदा त्रायताम् रक्षत्वित्यन्वयः । कीदृशी । कैलासः आलयः स्थानं यस्य तथाभूतस्य ( शम्भोः ) भालसम्बन्धिनो लोचनस्य वह्निरूपस्य रुचा अरुणकान्त्या निर्वर्तिता निष्पादिता सम्पादिता । अलक्तकस्य लाक्षारसस्य व्यक्तिः प्रकटता यस्यां तथाभूता, मानिन्याः पादपतने सांनिध्येन लाक्षारूणललाटनेत्रप्रभासम्पर्कादिति भावः । तेन शिवस्य गिरिजापादपतनं ध्वन्यते । सा का । यया नखद्युत्या सुदृढं यथा स्यात् तथा रूढा प्रवृद्धा कोकनदस्य रक्तोत्पलस्य अनुकारः सादृश्यं यस्यां कोकनदसदृशीत्यर्थः । अत एव सरसातिशयिता नेत्रयोः कान्तिः कोपजनिता शोणद्युतिः सद्यः तत्क्षणं समुत्सार्यते निःशेषेण दूरीक्रियते । अत्र गिरिभुवः कोपान्नेत्रयोः शोणा कान्तिरासीत् सा पादप्रणते शिवेऽपगतेति तत्त्वम् । तत्रेदमुत्प्रेक्ष्यते स्पर्धायाः विजीगीषायाः बन्धेन सातत्येन समृद्धयातिदीप्तयेव ।

अत्र किं कस्याङ्गम् इति चेत् त्रायतामित्यतः प्रतीतस्य कविनिष्ठस्य पार्वतीविषयकरत्याख्यभावस्य महादेवनिष्ठः पार्वतीविषयकः सम्भोगरूपः शृङ्गारः अङ्गम् । तस्य शृंगारस्य भावप्रकर्षार्थमेवोपादानाद् पुष्टविभावाद्यप्राप्त्याऽपुष्टत्वाच्च रसस्य भावाङ्गता । अत्रापि रसवदलङ्कार एव ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद् भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ।।

पञ्चाक्षरीनामा कविः अनेन श्लोकेन भोजराजं स्तुतवान् । हे पृथ्वि अत्युच्चाः अत्युन्नताः गिरयः पर्वताः परितः सर्वतः स्फुरन्ति समन्ताद् व्याप्य तिष्ठन्ति । एवम् स्फारा अतिविस्तृताः अम्भोधयः समुद्राः तथा स्फुरन्ति । हे पृथ्वि तानेतान् गिरिसमुद्रान् बिभ्रत्यपि धारयन्त्यपि त्वं किमपि किञ्चिदपि न क्लान्ता श्रान्तासि अतः तुभ्यं नमः इति भुवः पृथिव्याः स्तुतिम् आश्चर्येण यावत् मुहुर्मुहुः वारं वारं

प्रस्तौमि तावत्। हे राजन् इमाम् एतद्विशिष्टां भुवं बिभ्रत् पालयन्नेव विभ्रत् धारयन्नेव तव भुजः स्मृतः ( न तु भुजौ ) ततः भुजस्मरणात् वाचः पृथ्वीस्तुतिरूपाः मुद्रिताः सङ्कुचिताः इति वाच्यार्थः।

अत्र भूविषयकः कविनिष्ठो रतिभावो राजविषयकस्य कविनिष्ठस्य रतिभावस्याङ्गम्।

रसाभासभावाभासयोः भावाङ्गता यथा—

बन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे॥

कश्चित् कविः राजानं स्तौति। हे नृप ते तव सैनिकाः भटाः येषां द्विषां शत्रूणां मृगदृशः कातरतया मृगसदृशदृष्टयः स्त्रियः बन्दीकृत्य हठादाहृत्य पश्यतः तत्प्रियतमाननादृत्य ताः मृगदृशः श्लिष्यन्ति आलिंगन्ति प्रणमन्ति नमस्कुर्वन्ति लान्ति गृह्णन्ति चुम्बन्ति च। इत्यमनुचितप्रवर्तयितापि त्वं तैः प्रत्यर्थिभिः स्तूयसे हे औचित्यवारांनिधे औचित्यसमुद्र त्वम् अस्माकं सर्वेषां सुकृतैः पुण्यैः दृशोः निपतितोऽसि। तत् तस्मात् त्वद्दर्शनात् अखिलाः विपदः अस्माक ध्वस्ताः नष्टा इति वाच्यार्थः।

अत्र प्रथमार्धे सैनिकनिष्ठः शृंगारोऽननुरक्तस्त्रीविषयकतया परस्त्रीविषयकतया च प्रवृत्तः, द्वितीयार्धे तु प्रत्यर्थिनिष्ठो रतिरूपो भावः प्रकृतराजरूपशत्रुविषयकतया हार्यत्वेन प्रवृत्तः। एवमनौचित्यप्रवृत्तित्वादुभावपि रसाभासभावाभासौ राजविषयकस्य कविनिष्ठस्य रत्याख्यभावस्याङ्गभूतौ।

भावशान्तेर्भावाङ्गता यथा—

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात्॥

हे राजन् अविरलं निरन्तरं करवालस्य खड्गस्य कम्पनैः भ्रुकुटीकरणैः तर्जनैः अस्माभिर्मुहुर्मुहुः वारंवारं ददृशे दृष्टः। स तवेक्षणे तव दर्शने सति क्षणात् क्वापि गतः इति वाच्यार्थः।

अत्र वैरिणो मदाख्यो गर्वरूपो भावस्तस्य प्रशमः शान्तिः कविनिष्ठराजविषयकरतिभावेऽङ्गम् ।

भावोदयस्य भावाङ्गता यथा—

साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।

अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥

हे विभो प्रभो राजन् ते तव वैरिणि रात्रौ कुरङ्गकदृशा बालमृगनेत्रया (कान्तया) सुहृद्भिः स्निग्धैरपि साकं सार्धं मधुपानलीलां मद्यपानरूपां क्रीडां कर्तुं प्रवृत्ते सति अन्याभिधायि अनेकार्थतया त्वद्भिन्नस्यापि बोधकं तव नाम केनापि जनेन गृहीतम् उच्चारितं सत् तत्र वैरिणि क्रीडामन्दिरे विषमां कम्पादिकत्रीम् अवस्थां दशामकरोत् इति वाच्यार्थः ।

अत्र विषमावस्थाव्यङ्ग्यस्य त्रासरूपभावस्योदयः कविनिष्ठस्य राजविषयकस्य रत्याख्यभावस्याङ्गम् ।

भावसन्धेर्भावाङ्गता यथा—

असोढा तत्कालोल्लसदसहभावस्य तपसः ।
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ॥
प्रमोदं वो दिश्यात् कपटबटुवेषापनयने ।
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

तपः कुर्वतीं पार्वतीं बटुवेषेण छलयतो महादेवस्य वर्णनमिदम् । कपटेन छलेन यो बटोर्ब्रह्मचारिणः वेषः आकारविशेषः तस्य अपनयने त्यागे युगपत् समकालमेव त्वराशैथिल्याभ्यामभियुक्तः आक्रान्तः स्मरहरः शिवः वः युष्मभ्यं प्रमोदम् आनन्दं दिश्यात् दद्यात् इति वाच्यार्थः । त्वराशैथिल्ययोर्हेतुगर्भे विशेषणे असोढेति चरणद्वयेनाह—तत्काले पार्वत्याः बालत्वकाले उल्लसन् प्रादुर्भवन् असहभावो दुःसहत्वम् यस्य तादृशस्य तपसः असोढा सोढुमसमर्थो यः फलदाने बिलम्बयितुमक्षम इत्यर्थः । 'अथ' च समुच्चये शैलदुहितुः पार्वत्याः कथाविश्रम्भेषु (विश्वस्ततया) प्रणयेषु वा रसिकः प्रीतिमान् स्मरजेतापि यां दृष्ट्वा यत्कथयाऽऽकृष्टचित्तः कृत इति वाच्यार्थः ।

अत्र स्मरहरगतयोः त्वरापदगम्ययोरावेगधैर्याख्ययोः भावयोः सन्धिः कविनिष्ठस्य शिवविषयकरतिभावस्याङ्गम् ।

भावशबलताया भावाङ्गता यथा —

पश्येत् कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ॥

किञ्चिद्दुद्भिन्नयौवनायाः प्रकृतनृपविरोधिवननिवासिनृपकन्यायाः फलाद्याहरणसमये कस्मिंश्चित्कामुके जातानुरागाया उक्तिवर्णनमिदम् । हे पृथ्वीपरिवृढ भूस्वामिन् राजन् अरण्ये वृत्तिर्वर्तनं यस्य तस्यारण्यवृत्तेः भवद्विद्विषः तवच्छत्रोः कन्या कुमारी फलानि किसलयानि कोमलपल्लवांश्च आददाना गृह्णन्ती सती कंचित् कामुकम् इत्यभिधत्ते । कश्चिज्जनः पश्येदिति शङ्का, रे चपल स्वच्छन्दाचरणशील चल इति अपसर असूया । का त्वरेति सत्वरं जिगमिषावारणायेदं धृतिः अहं कुमारी इति मम नैवंविधं स्वातन्त्र्यमुचितम् इति स्मरणम् । हस्तरूपमालम्बनं वितर देहीति श्रमः । हहहेति दैन्यम् । व्युत्क्रमः कन्यागमनरूपविपरीताचरणम् । अयं विबोधः । असि इति त्वमर्थे विभक्तिप्रतिरूपकमव्ययम् । त्वं क्व कुत्र यासि इति औत्सुक्यम् । अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता नृपविषयके रति-भावेऽङ्गम् । एते एव गुणीभूता रसादयः रसवदाद्यलंकारव्यपदेशं लभन्ते । रस-वत्प्रेयऊर्जस्विसमाहितभावोदयभावसन्धिभावशबलताश्चेति रसवदादयो येऽलङ्-कारा: पूर्वमुक्तास्तेऽत्रोदाहृताः ।

ननु 'गुणीभूतो रसो रसवत् भावस्तु प्रेयः रसाभासभावाभासौ ऊर्जस्वि, भाव-शान्तिः समाहितः' इत्यस्यैव पूर्वेषामलङ्कारव्यवहारः अतो रसादिचतुष्टयस्य रस-वदाद्यलङ्कारत्वं युक्तम् न तु भावोदयादीनाम् इत्याशंकयानुवदति । यद्यपि भावो-दयभावसन्धिभावशबलत्वानि नालङ्कारतयोक्तानि तथापि कश्चिद् ब्रूयादित्येव-मुक्तम् । नालङ्कारतयोक्तानि व्यक्तिविवेककृद्भिर्महिमभट्टैः स्वे विवरणे । श्रीमन्म-म्मटमते रसवदादीनामपि नालङ्कारत्वम् । परमतमेतदत्रानूदितम् इति ।

अथ शब्दशक्तिमूलानुरणनरूपोपमालङ्कारस्य ( लक्ष्यक्रमस्य ) वाच्याङ्गता-भासपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—जनस्थाने इति ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।

कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥

राजसेवानिर्विण्णस्य कवेरुक्तिरियम् । पद्यस्य व्याख्यानमेवम् । मया रामत्वं राम-धर्मं आप्तं प्राप्तं परन्तु कुशलं परिणामसुरसम् उद्वेगनिरासनिपुणं वा आयति शुद्धं वा वसु धनं यस्य तद्भावः कुशलवसुता सैव कुशलवौ सुतौ यस्या इति व्युत्पत्त्या सीता सा तु ना नाधिगता न प्राप्ता । रामत्वं कथं प्राप्तं तदाह—कनकस्य सुवर्णस्य मृगो मार्गणम् ( अन्वेषणम् ) प्रार्थना वा यत्र या तृष्णा । अथवा कनके वा या मृगतृष्णा निष्फलाशा सैव कनकमृगे मारीचे तृष्णा तया अन्धिता विवेकरहिता धीर्यस्य तादृशेन मया । यद्वा अन्धितया धिया जनानां स्थाने ग्रामनगरादौ भ्रान्तं भ्रमणमेव जनस्थाने दण्डकारण्ये भ्रमणं तत् कृतम् । वै निश्चयेन देहि प्रयच्छ इति वचः वचनमेव वैदेहीति सीतासम्बोधनवचनम्, तत् प्रतिपदं प्रतिस्थानम् उद्गतम् उत्थितम् अश्रु अश्रुजलं यत्र यद्यथा भवति तथा प्रलपितं वृथैवोक्तम्, भर्तुः भरण-कर्तुः धनिकस्य परिपाटीषु सेवारचनासु अलम् अत्यर्थं का घटना न कृता वद । अथवा कामभर्तुः कुत्सितभर्तुः वदनपरिपाटीषु मिथ्याभाषणप्रकारेषु घटना उपपत्तिः सा एव लङ्काभर्तुः रावणस्य वदनपरिपाट्यां मुखपङ्क्तौ इषुघटना शरसंयोजनं सा अलम् अत्यर्थं कृता इति श्लेषपदस्थितपदार्थानामभेदारोपाद्रामत्वोपपत्तिः इति वाच्यार्थः ।

अत्र शब्दशक्तिमहिम्ना पादत्रयद्योत्या प्राकृताप्रकृतयोः कवयितृरामयोः उपमा मयाप्तं रामत्वम् इति वाच्यायाः रामत्वप्राप्तेरुपकारकतयैव कवेरभिप्रेतेति उप-मायाः वाच्यांगत्वम् । उपमानोपमेयभावः सादृश्यम् । जनस्थानादीनां परिवृत्त्य-सहत्वात् शब्दशक्तिमूलता । 'रामत्वमाप्तम्' इत्यनेनैव वाच्यार्थसिद्धिरिति नोप-मायाः वाच्यसिद्धेरङ्गत्वम् । इवाद्यभावेनोपमाया वाच्यत्वाभावान्नात्रोपमालङ्कारः किन्तु मध्यमकाव्यमेव ।

अर्थशक्तिमूलानुरणनरूपस्य ( लक्ष्यक्रमस्य ) वस्तुनो वाच्याङ्गतायाङ्गपराङ्ग-व्यङ्ग्यं मध्यमकाव्यमुदाहरति । आगत्येति—

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥

मौग्ध्याद्विनैवानुनयं त्यक्तमानां प्रति सख्या उक्तिरियम् । हे तन्वङ्गि क्वचि-

दपि क्वचिदेव ( द्वीपान्तरे एव नायिकान्तरगृहे ) क्षपिता अतिवाहिता त्रियामा रात्रिर्येन तथाभूतः सहस्ररश्मिः सूर्यः सम्प्रति अधुना प्रभाते जाते सति शनैः अतिभीत इवातिलज्जित इव मन्दं मन्दम् आगत्य एताम् अम्भोजिनीम् कमलिनीमेव नायिकां पादपतनेन किरणसंयोगेनैव चरणपतनेन (प्रणामेन) प्रसादयति विकासयति एवानुनयति । एतत् पश्यत्यन्वयः । कीदृशीम् वियोगे द्वीपान्तरे सूर्यस्य सञ्चारणे अस्तेन सम्बन्धाभावः स एव वियोगो विरहः तेन विसंष्ठुलाङ्गीं सङ्कुचिताङ्गीमेव सन्तापकार्श्यादिना विषमाङ्गीमित्यर्थः ।

अत्र विनैवानुनयमवगतमाना नायिका सख्या उपालभ्यते । तथाहि सहस्ररश्मिरित्यनेन बहुलनायिकावत्त्वं व्यज्यते । अम्भोजिनीमित्यनेन वर्ण्यायाः पद्मिनीत्वम् । क्वचिदपि क्वचिदेवेत्यनेन उपनायिका गृहे एवेति निश्चयाभावः । तत्रापि भ्रामकमेव न त्वधिकम् एवं चेदृशोऽपि ईदृशीं स्वयमेवागत्य पादपतनेनानुनयति ईदृशो हि कामिनोर्व्यवहारः । त्वं पुनर्बहुतरकालं परनायिकासक्ते धूर्ते विनैवानुनयं मानं त्यक्त्वा प्रसन्नाऽसीत्युपालम्भः । एवञ्च नायकनायिकावृत्तान्तकथनमेवाभिप्रेतम् स च वृत्तान्तो व्यज्यमानः वाच्ये रविकमलिनीवृत्तान्तेऽभिन्नतया च आरोप्यमाणस्तस्य प्रकृतार्थतां सम्पादयन् तदुत्कर्षमाधत्ते इत्यङ्गतैवास्ते । अयमेव समासोक्त्यलङ्कारः । एतत्सर्वमभिप्रेत्याह—वृत्तौ । नायकवृत्तनायिकेत्येकशेषः । नायकनायिके इत्यर्थः । वृत्तान्तो व्यवहारः वस्तुरूपः । यत्र स्वातन्त्र्येण धर्मिद्वयमवगम्यते तत्रैकधर्मान्वये सति उपमाङ्गीकारात् एवं धर्मिद्वयावगतावेव तादात्म्यारोपे रूपकांगीकारान्न रूपकमपि व्यंग्यं किन्तु वस्तुरूप एवेति भावः । यद्यपि तादृशशब्दस्य श्लिष्टत्वात् परिवृत्त्यसहत्वात् शब्दशक्तिमूलत्वं सम्भवति तथापि अर्थशक्तिमूलत्वेन व्यपदेशः । परिवृत्तिसहशब्दानां बाहुल्यात् तेषां प्राधान्येन व्यपदेशा भवन्तीति न्यायात् । रविकमलिनीवृत्तान्तस्य नायिकावृत्तान्तापेक्षत्वात् अप्रकृतनायकनायिकावृत्तान्तोपस्थितिं विनापि वाक्यार्थस्य पर्यवसानात् न वाच्यसिद्ध्यङ्गत्वम् अपि तु प्रतीतस्य वाच्यस्य व्यंग्येन शोभामात्रमाधीयते इत्यपरांगत्वमेव । यत्र पुनर्व्यंग्येन विना वाच्यमेवात्मानं न लभते तत्र वाच्यासिद्ध्यङ्गत्वमिति व्यङ्ग्यसापेक्षसिद्धिभ्यां तयोर्भेदः अध्यारोपेणैव उत्कर्षकतयैवेत्यर्थः । एवं च वाच्ये रविकमलिनीवृत्तान्तोत्कर्षतयैव स्थितः न तु प्रधानतया इति ।

प्र० ३—व्याख्यायतां निम्नोद्धृता पदपङ्क्तिस्तत्प्रयोजनपुरःसरम् 'यद्यपि स नास्ति कश्चिद्विषयः यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद् व्यवहारः'।

उ० ३—ननु 'अयं स रशनोत्कर्षी' इत्यत्र प्रकरणगम्यस्य करुणस्य प्राधान्येन सम्भवति ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेत्याशङ्क्ते—'यद्यपि स' इत्यादि। यद्वा ननु रसध्वनौ भावध्वनिरवश्यं वाच्यः। तथा च कञ्चन प्रधानव्यङ्ग्यमादाय ध्वनित्वं कञ्चनाङ्गभूतमादाय गुणीभूतव्यङ्ग्यत्वमिति निमित्तद्वयसमावेशाद्विनिगमनाविरहे कथं व्यपदेशनियमः इत्याशङ्क्ते—यद्यपि स इत्यादि। कश्चिद्विषयः कश्चिदाश्रयः ध्वनिगुणीभूतव्यङ्ग्ययोः उत्तममध्यमकाव्ययोः स्वप्रभेदादिभिरिति। स्वशब्देन ध्वनिगुणीभूतव्यङ्ग्ययोर्ग्रहणम्। प्रभेदोऽवान्तरभेदः। आदिपदेन विजातीयप्रभेदपरिग्रहः। सङ्करः अङ्गाङ्गित्वात्। द्वयोः प्राधान्ये संसृष्टिः। सर्वत्र रसध्वनौ भावध्वनेः सत्त्वेन तयोरुपकार्योपकारकतया सङ्करापत्तिः। अवान्तरध्वनीनां प्रधानध्वनिरूपेतराङ्गतया गुणीभूतव्यङ्ग्यस्य चापत्तिरिति यद्यपि साङ्कर्यादिकमस्ति तथापि 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहारः। प्राधान्यं च चमत्कारप्रयोजकत्वम्। तथा चाङ्गीभूतरसादीनां चमत्कृत्यातिशये गुणीभूतव्यङ्ग्यत्वमङ्गिस्थानत्वे ध्वनित्वमिति भावः। एवञ्च 'अयं स रशनोत्कर्षी'त्यादौ करुणध्वनावपि गुणीभूतव्यङ्ग्यशृङ्गारेणैव चमत्कार इति तेनैव व्यवहारो न ध्वनित्वेन सहृदयहृदयसाक्षिकः। एतेनोक्तोदाहरणे मुख्यत्वेन करुणस्यैव प्राधान्यमिति निरस्तम्। शृङ्गारवर्णने कवेः संरम्भात्।

प्र० ४—'एषां भेदा यथायोगं वेदितव्याश्च पूर्ववद्' व्याख्यायतामिदं सूत्रार्धं 'वृत्त्युक्तकथनविशेषं लक्ष्यीकृत्य वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम्' इति।

उ० ४—अनेनोक्तानामष्टानामेव गुणीभूतव्यङ्ग्यानामवान्तरभेदानाह—एषामिति। शुद्धभेदानाह—एषामिति। एषामुक्तप्रकाराणां गुणीभूतव्यङ्ग्यानां भेदाः पूर्ववच्च ध्वनिभेदवत् यथायोगं यथासम्भवं वेदितव्याः बोद्धव्याः। अयं भावः। न केवलमेते अष्टावेव गुणीभूतव्यङ्ग्यस्य भेदाः। किन्तु अर्थान्तरसङ्क्रमितवाच्य-

त्वादिभिरुपाधिभिः यथा ध्वनेर्भेदास्तथाऽसम्भविनो विहायास्यापि तैरुपाधिभिः शुद्धभेदाः सङ्करसंसृष्टिभ्यां योजने च तेषामिवैषां च सङ्कीर्णभेदा अपि बोद्धव्याः असम्भविनश्च वस्तुमात्रेणालङ्कारनिबन्धनाः। एवञ्च यत्र वस्तुनाऽलङ्कारव्यक्तिस्तत्र गुणीभूतव्यङ्ग्यत्वं मा प्रकाङ्क्षीदिति यथायोगमित्युक्तं बोध्यम् तत्र ध्वनिकारसम्मतिमाह—'व्यज्यन्ते' इति। यथा 'व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा। ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयाद्[1]॥' इति। अस्य व्याख्यानम्। यदा वस्तुमात्रेण वाच्यालङ्काररहितेनालङ्कृतयोऽलङ्कारा व्यज्यन्ते तदा तासामलङ्कृतीनां निश्चयेन ध्वन्यङ्गता ध्वनिव्यवहारप्रयोजकता। वाच्यवस्त्वपेक्षयाऽलङ्कारत्वेनैवातिशायितया ध्वनित्वनिर्वाहकतेति यावत्। कुतः काव्यवृत्तेः काव्यव्यवहारस्य तदाश्रयाद् अलङ्कारसापेक्षत्वादित्यर्थः इति ध्वनिकारोक्तदिशा न तत्र गुणीभूतव्यङ्गयत्वमिति। अयं भावः। वाच्याद्वस्तुनोऽलंकारस्य चारुत्वनियमेन अगूढत्वादिना व्यङ्गयत्वाधीनचारुत्वापनयेऽपि अलंकारत्वकृता चारुता अव्याहतैवेति सर्वत्र वस्तुव्यंगयालंकारस्थले ध्वनित्वमेव न गुणीभूतव्यंगयत्वम्। वस्तुमात्रेण इत्यनेन वाच्यालङ्काररहितेनेत्यर्थः तत्सहितवस्तुनाऽलङ्कारव्यञ्जने यत्र तु वाच्यालंकारापेक्षया व्यङ्गयालङ्कारस्य चारुत्वं तत्र गुणीभूतव्यङ्ग्यत्वमेव। तथा च वस्तुव्यङ्ग्यालंकृतिभेदहीनः द्विचत्वारिंशत्प्रकारः शुद्धो गुणीभूतव्यङ्ग्यभेदः।

एवञ्च स्वतःसम्भविकविप्रौढोक्तिसिद्धकविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यालङ्काराणां पदवाक्यप्रबन्धगतत्वेन त्रिरूपतया वस्तुव्यङ्गयालङ्कारस्य नवविधत्वमिति ध्वनिभेदैकपञ्चाशतो (५१) नवन्यूनेन (५१–९) अष्टानां भेदानां प्रत्येकं द्विचत्वारिंशद्विधत्व (४२) मिति मिलित्वा गुणीभूतव्यङ्ग्यस्य षट्त्रिंशदधिकत्रिशतं (३३६) भेदः (४२ × ८ = ३३६) शुद्धाः एवमस्य संसृष्टिसंकाराभ्यां (३३६ × ४ × ५३३६ = ४५, १५८४) चतुरशीत्यधिकपञ्चशताधिकैकपञ्चाशत्सहस्रोत्तरचतुर्लक्षभेदाः संकीर्णाः शुद्धभेदैः सह (४, १५८४ + ३३६) विंशत्यधिकनवशतोत्तरैकपञ्चाशत्सहस्राधिकचतुर्लक्षभेदाः (४५१९२०)। गुणनप्रकारन्तु ध्वनिस्थलीयोक्तदिशोऽवसेयः इति।

---

१. कारिकाविवरणप्रकरणेऽस्य प्रपञ्चो विस्तरशोऽवलोकनीयः।

प्र० ५—'साऌङ्कारैर्ध्वनेस्तैश्चे'ति सूत्रस्य व्याख्याने वृत्तौ मूलग्रन्थे कथितं तावत् 'शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम् । का गणना तु सर्वेषाम् ? सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः । व्यङ्ग्यस्य त्रिरूपत्वात्' इत्युक्त्वा कथं तत् त्रैविध्यं प्रदर्शितम् ? तथा च यैः प्रतिपक्षिभिः 'ननु व्यञ्जनायाः शशविषाणायमानत्वात् कुतो व्यङ्ग्यत्रैरूप्यकृतो भेदः' इत्युक्त्वा व्यङ्ग्यं व्यञ्जनाव्यापार एव वा शब्दस्य न स्वीक्रियते तेषां मते का विप्रतिपत्तयस्तथा च तासां विप्रतिपत्तीनां निरासश्च ग्रन्थे कथमुपदर्शितः इत्येतत् सर्वं समासेनानूद्यताम् ।

उ० ५—सालङ्कारैरिति 'आगत्य सम्प्रती'त्यादिगुणीभूतव्यङ्ग्योदाहरणे स्थितैः समासोक्त्यादिभिः अलंकारयुक्तैर्गुणीभूतव्यङ्ग्यैर्वा गुणेन तेषां चैकरूपया संसृष्ट्या त्रिविधेन संकरेण गुणने पुनः परस्परं योगे निष्पन्नसंख्याया अतिबाहुल्येन संख्यातुमशक्यत्वात् संक्षेपविस्तराभ्यां शास्त्रप्रवृत्तिरित्युक्तदिशा संक्षेपेण गणनाप्रकार उच्यते । संकलने पुनरिति । यस्त्वलंकाररसरूपत्वेन ध्वनेस्तावत् त्रैविध्यम् । तत्रापि किञ्चिदभिधया वक्तुं शक्यम् । किञ्चिदन्यथेति द्वैविध्यमेव । तत्र वस्त्वलंकारयोः शक्तिप्रतिपाद्यत्वमस्ति । रसस्य व्यंग्यत्वान्न शक्तिप्रतिपाद्यत्वम् । तस्य रसशब्देन शृंगारादिशब्देनाऽनभिधानादभिधाने च प्रत्युत दोषस्यैव वक्ष्यमाणत्वात् । 'शून्यं वासगृहम्' इत्यादौ रसादिपदानामप्रयोगेऽपि विभावादिघटितसामग्र्याः रसोत्पत्तेर्दर्शनाद् अन्वयव्यतिरेकाभ्यां विभावादिसामग्रीसत्त्वे रसचमत्कारविषयत्वमिति निर्णीयते । लक्षणाहेतूनां मुख्यार्थबाधादीनामभावात् रसस्य लक्षणीयत्वं वक्तुमशक्यम् प्रतीतेश्च सकलजनसंवेद्यत्वात् वृत्तिं विना बोधादर्शनाद् व्यञ्जनानामिका वृत्तिः रसप्रत्यायनायावश्यं कल्पनीयेति रसस्य व्यंग्यत्वम् ।

लक्षणामूलगूढव्यंग्यप्राधान्ये 'त्वामस्मि'—'उपकृतमि'त्यादौ रूढ्यभावात्प्रयोजनवत्यां प्रयोजनस्य व्यञ्जनाव्यापारगम्यत्वमेवेत्युक्तं प्रागिति वस्तुमात्ररूपं व्यंग्यमवश्यमपेक्षितमिति तन्मूलकत्वादेव वस्तुध्वनिरिति व्यवहारः । शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलंकारस्य च निर्विवादं व्यंग्यत्वम् । अर्थशक्तिमूलनानुरणनरूपव्यंग्यस्थलेऽपि अभिहितान्वयवादिमते घटादिपदानां घटव्यक्तिमात्रबोधनेनोपक्षीणानां समीपस्था-

च्छिद्रादिप्रतीतौ न आकाङ्क्षायोग्यतादीनां कारणत्वं वाच्यमिति वाक्यार्थोऽप्यपदार्थस्तत्र तृतीयकक्षायां प्रतीतस्य व्यंग्यार्थस्य कथमभिधाजन्यप्रतीतिविषयत्वं वक्तुं शक्यते। अन्विताभिधानवादिनः 'विषयतासम्बन्धेन शब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन वृत्तिज्ञानाधीनोपस्थितिः कारणम्' इति सामान्यतः कार्यकारणभावमाहुः। ततश्च संसर्गे शक्तिविषयताया अभावे शब्दविषयताया असम्भवात्। तत्रापि पदानां शक्तिमेव स्वीचक्रुः। उपपत्तिं चात्र वदन्ति। शक्तिग्राहकेषु मुख्यो व्यवहार एव कोशाप्तवाक्यादिभिरपि शक्तिग्रहो बहुऽन्येषु पदेषु शक्तिं जानतामेव सम्भवति। यो हि नारायणपदार्थं न जानाति इदं पदार्थं वाच्यत्वपदार्थं वा स 'विष्णुर्नारायणः कृष्ण' इति कोशाद्वा 'अयं घटपदवाच्य' इति आप्तोपदेशाद्वा विष्णुपदस्य घटपदस्य वा शक्तिं ज्ञातुं न शक्नोति। व्यवहारेण तु सर्वथा शक्तिज्ञानशून्योऽपि ज्ञातुं शक्नोति। तद्यथा स्वामिना भृत्यं प्रति 'घटमानये'त्युक्ते तटस्थोऽन्योऽव्युत्पन्नस्तदीयं शब्दं शृणोति। वक्तारं भृत्यं घटं चावलोकयति। भृत्यस्य च प्रवृत्तिं पश्यति। तथा प्रवृत्त्या तदात्मनि कृतिमनुमिनोति। कृत्या चिकीर्षा, चिकीर्षया इष्टसाधनत्वज्ञाने एतद्वाक्यजन्यमेतद्वाक्यात्पूर्वमविद्यमानत्वे सति एतद्वाक्योत्तरत्वादिति हेतुनाऽनुमिनोति। ततश्च घटानयनं मदिष्टसाधनमिति भृत्यसमवेतज्ञाने एतद्वाक्यजन्यत्वज्ञानमेवाखण्डवाक्यार्थयोः प्राथमिकः शक्तिग्रहः। अत्रानयोर्वाक्यार्थयोः सम्बन्धाभावे एतद्वाक्याधीना एतद्वाक्यप्रवृत्तिर्न स्यादित्यर्थापत्तेराकारः। स च सम्बन्धः 'इदं वाक्यं वाचकम् अयमर्थो वाच्यः' इत्येतन्मात्राकारकः एकत्र वाच्यमन्यत्र वाचकं चेत्यन्तर्भाव्य ज्ञायते चेत् पुनर्बोधनियमो न प्राप्नोति। अतः वाच्यवाचकभावरूपसम्बन्ध एवानयोः इत्यसौ द्वयात्मकः। अनन्तरं पदान्तरावापोद्वापाभ्यामानयनाद्यंशत्यागेऽपि घटादिज्ञानेन साकं यथानियमस्तथा सम्बन्धज्ञानेनापि। नहि केनापि असम्बद्धो घटः भृत्यप्रवृत्तिविषयः 'गौरश्वः पुरुषो हस्ती'त्यादिप्रतिपादकमात्रेषु स्वामिनोक्तेषु भृत्यप्रवृत्त्यदर्शनात्। ततश्चानयनादेरिव कर्मत्वादेरपि संसर्गस्य 'घटमानय घटेनानय, घटे आनये'त्यादौ व्यभिचारदर्शनेऽपि सम्बन्धसामान्यस्याव्यभिचारात् पदार्थान्तरसम्बन्धो 'घटो घटपदवाच्यः' इत्येव शक्तिग्रहाकारः पर्यवस्यति। अत एव न शक्त्यानन्त्यं तथा न पदान्तरवैयर्थ्यमपि। एवं स्थिते लाघवेन बाधादिना शाब्दबोधीयाया घटत्वावच्छिन्नाया विषयताया वस्तुतः अच्छिद्रसमीपस्थघटवृत्तित्वेऽपि यथा घट-

निष्ठविषयताया अभिधाप्रयोज्यत्वे नानुपपत्तिः, तथा संसर्गत्वावच्छिन्नाया विषयताया वस्तुतः कर्मत्वातिसंसर्गविशेषनिष्ठत्वेऽपि नाभिधाप्रयोज्यताबाधः। एतन्मते अवच्छेदकांशे 'सामान्यमवच्छेद्यांशे विशेषश्च शक्तिविषय इति फलितम्।

अच्छिद्रत्वादौ सङ्केताभावेऽपि घटत्वसामान्ये वस्तुतः अच्छिद्रघटविशेषे च सङ्केतग्रहात् एवं संसर्गेऽपि। एतावता प्रबन्धेन सम्बन्धांशे पदशक्तिसाधनेन पदेन पदार्थविशेषेण सह सम्बन्धविशेषेणान्वितघटविशेषस्य शक्त्या बोधनोत्तरं यः पश्चादन्योऽर्थः प्रतीयते तत्र शक्तिविषया न सम्भवति पदव्यापारस्योपक्षीणत्वात्। कार्यात्कारणं गम्यते इति घटपदानन्तरं घटबोधदर्शनेन यथा घटपदे तद्बोधकतारूपा शक्तिरनुमीयते तथा 'निःशेषे'त्यादौ तदन्तिकमेव गतासीति प्रतीत्या तज्जनकत्वं तस्मिन्वाक्ये कल्पनीयमेव बोधजनकतैव शक्तिरित्यलं व्यञ्जनयेति श्रीशङ्कुकस्याशयः। समाधाता तु शक्तेर्द्वैविध्यमुपपादयन् पदनिष्ठशक्तेः स्वरूपसत्या अकारणत्वाच्छक्तिग्रहस्यापेक्षितत्वात् शक्तिग्रहस्य च पूर्वमभावे कथमभिनवकविविरचितवाक्यैस्तादृशार्थप्रतीतिरिति तत्प्रतीतये शब्दगतः अभिधाभिन्नः व्यञ्जनाख्यो व्यापार आवश्यक इत्याह।

केचन मीमांसकाः—तात्पर्यबोधजनकत्वरूपया अभिधाया एव व्यापारविशेषं मन्यमानाः अर्थवादवाक्यानां प्राशस्त्ये निन्दायां वाऽशक्यायामपि बोधोपयोगित्वमालोचयन्तस्तद्वदेव तात्पर्येणैव व्यंग्यार्थप्रतीतिसिद्धेः अलं व्यञ्जनयेत्याक्षिपन्ति। तेषामयमाशयः—वेदत्वावच्छेदे नहि प्रामाण्यमिष्यते। न च सम्भवति। 'अग्निर्हिमस्य भेषज'मित्यादीनामबाधितार्थकानामपि तदर्थस्य लोकावगतत्वात् अनधिगतार्थविषयकबोधजनकत्वरूपं प्रामाण्यस्यासम्भव एव। अतस्तेषां प्रवर्तनीयक्रियायां निवर्तनीये वा विषये प्रशंसानिन्दान्यतरबोधने एव तात्पर्यम् एवं व्यंग्ये रसादावपि भविष्यति। तत्रेदं वक्तव्यम् जातिगुणद्रव्याणां लोकावगतत्वाद्विधिवाक्येष्वपि तद्बोधकानां पदानामनधिगतार्थविषयकप्रतीतिजनकत्वाभावेऽपि प्रवर्तनीयक्रियान्वयेन क्रियाविशेषबोधनादनधिगतार्थेत्यादिवक्तव्यम्। नहि 'व्रीहिभिर्यजेत्' इत्युक्ते व्रीहिस्वरूपं प्रागनवगतं किन्तु याग एव। अतः स एव अपूर्वबोध्यत्वेन विधेयः। तदाह सूत्रकारः, 'भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयते एष ह्यर्थो विधीयत' इति। क्रियैव

कर्तुमकर्तुमन्यथाकर्तुं वा शक्यत्वाद् विधातुं योग्या। जात्यादयस्तु न तथा। परन्तु कारकैरविशेषितस्य तस्य यागमात्रस्य विधित्सितत्वात् यागविशेषस्वरूपज्ञापनाय जात्यादय उपयुज्यन्ते। तदाह—'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति भूतं सिद्धं जात्यादि। भव्या जन्यत्वेनैव प्रतीयमानानां क्रिया। तत्र यद्यपि क्रियाया इव तत्क्रियानिरूपितव्रीह्यादिनिष्ठकारणत्वादेरपि अनवगतत्वात् करणत्वादिपुरस्कारेण व्रीहिरपि प्रागनवगत इति विधातुं शक्यः, तथापि क्रियायां विधेयत्वे विशेषस्यैवानवगमात् अनधिगतार्थविषयकज्ञानजनकत्वं सुलभम्। व्रीह्यादिपदानान्तु विशेषणानवगतप्रयुक्तमिति परम्परया तद्वक्तव्यम्। तत्र साक्षात्प्रामाण्यसम्भवे परम्परया तत्किमिति वक्तव्यमिति। क्रियैव सर्वत्र विधीयते इति सूत्रकृदाशयः। परं तु यत्र 'व्रीहिभिर्यजेते'त्यादिना क्रियाविशेषोऽवगमितः तत्र पश्चात् पठितेन 'समे यजेते'त्यादिना यागस्य विधानमशक्यत्वादगत्या समे देशे तदधिकरणत्वमात्रं विधीयते तदाह 'अदग्धदहन'न्यायेन यावदप्राप्तं तावद्विधीयते इति। आद्यवाक्ये तु करणत्वाकारेण व्रीहयोऽपि यागोऽपि चेति द्वयमनधिगतमेव विधीयते। समे यजेतेत्यनेन तु समदेश एवेति। एवं जातीयको गुणविधिरित्युच्यते। आद्यस्तु विशिष्ट इति एवं विशेषणान्तरयोगेऽप्यूह्यम्। यथा—'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयम्। यथा वा 'रक्तं पटं वये'त्यादौ। यत्र तु लौकिकवाक्येष्वपि 'मास्य गृहे भुङ्क्थाः' इति एकवाक्यसमीपे आप्तेन 'वरं विषं भक्षये'त्युच्यते तत्राप्तस्यास्य विषभक्षणे प्रवर्तनासम्भवात् वाक्यैकवाक्यं तया तात्पर्यानुपपत्त्या तद्गृहभोजने निन्दायां लक्षणाऽऽश्रीयते तेन विषभक्षणादधिकानिष्टजनकं तद्गृहभोजनमिति वाक्यैकवाक्यता सम्पद्यते। तदाह—'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु'रिति तेन पूर्वंप्रदर्शितद्विविधार्थवाक्यानां स्तुतौ निन्दायां वा लक्षणेति पर्यवस्यति। एतावता सर्ववैदिकवाक्यानामनधिगतार्थविषयकज्ञानजनकत्वं परिरक्षितं भवति। यत्र तु 'शून्यं वासगृहमि'त्यादौ स्वार्थे तात्पर्यानुपपत्तिरेव नास्ति तादृशेऽभिधामूलव्यंग्ये कारणाभावेन लक्षणाया असम्भवात्। अभिधायाश्च संकेतितार्थमात्रबोधनेनोपक्षीणत्वात् पश्चाज्जायमाना व्यंग्यार्थप्रतीतिर्वृत्त्यन्तराश्रयणं विना न सम्भवतीति आवश्यकी व्यञ्जना।

इदानीं 'यदि च शब्दश्रुते'रित्यादिग्रन्थेन व्यञ्जनानङ्गीकारे दोषदृष्टि-माह शब्दश्रवणप्रत्यक्षाव्यवहितोत्तरं यदर्थविषयकप्रतीतिः सा शक्तिजन्यैवे-त्युक्तौ "ब्राह्मण पुत्रस्ते जातः, कन्या ते गर्भिणी'त्यादिस्थले मुखप्रसादमुख-मालिन्यादिनाऽनुमितहर्षशोकबुद्धीनामभिधाजन्यत्वं स्यात् । किञ्च 'गङ्गायां घोषः' इत्यादावपि दीर्घदीर्घतराभिधाव्यापारेणैव तीररूपार्थप्रतीतिसिद्धौ लक्षणाया अनुपयुक्तत्वं स्यात् । किञ्च 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्य-मर्थविप्रकर्षादि'ति जैमिनीयसूत्रेण लिङ्गादीनामुत्तरोत्तरं विलम्बेनार्थोपस्थापक-तया श्रुतेश्च सर्वापेक्षया आद्योपस्थितत्वेन बलीयस्त्वमित्युक्तम् । तत्र लिङ्गापेक्षया श्रुतेर्बलवत्त्वे उदाहरणम् 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति । अत्र इन्द्रो देवता अस्येत्यैन्द्रीति व्युत्पत्त्या तस्या ऋचः इन्द्रोपस्थानाङ्गत्वे प्राप्तेऽपि गार्हपत्यः स्तूयते । तत्र यदि शब्दश्रुत्यनन्तरोपस्थितसकलार्थबोधनेऽभिधाव्यापारः स्यात्तदा श्रुत्युपस्थापितार्थस्येव लिङ्गाद्युपस्थापितार्थस्याप्यभिधेयतया सर्वेषां समकाल-मेवार्थोपस्थापकत्वेन मुनिनोक्तमर्थविप्रकर्षत्वमनुपपन्नं स्यात् । एवञ्च इषुस्थले स्वरूपसतः कारणत्वेन तया वक्तुं शक्यत्वेऽपि पदेऽर्थबोधानुकूलशक्तेः ज्ञाताया एव कारणत्वान्निःशेषच्युतेत्यादौ तदन्तिकमेव रन्तुं गतासीत्यादिविधेः अभिधा-प्रतिपाद्यत्वाभावेन व्यंग्यत्वं सिद्धमेव ।

किञ्चान्विताभिधानवादिमते व्यञ्जनाङ्गीकारे कष्टत्वादीनां नित्यदोषत्वम् साधुत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । तदङ्गीकारे च श्रृंगाररसे व्यंग्ये पुरुषवर्णस्य प्रतिकूलत्वेन दोषत्वं, वीरादिरसे व्यंग्येऽनुकूल-त्वेन गुणत्वमिति भवति नित्यानित्यदोषव्यवस्था । 'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः' इत्यादौ च कपालिपिनाक्यादिपदयोः शिववाचक-त्वेऽपि कपालिन इत्युक्त्या दरिद्ररूपार्थप्रतीत्या शोचनीयस्य युक्तता सङ्गच्छते ।

वाच्यव्यंग्यभेदमूलक एव वाचकव्यञ्जकशब्दयोर्भेद इति दर्शयति । वाच-कशब्दस्य घटाद्यर्थापेक्षा संकेतितार्थे एव । अभिधाया उक्तत्वात्, व्यञ्जकस्तु न तथा । किञ्चासुन्दराख्ये गुणीभूतव्यंग्योदाहरणे 'वाणीरकुडङ्गेत्य'त्यादौ प्रतीयमानं व्यंग्यमनपेक्ष्य सीदन्त्यङ्गानीति वाच्यमेव सचमत्कारं श्रृंगार परिपोषयति । तत्र तात्पर्योऽविषयः । दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति

व्यंग्यरूपो वाचकशब्देनाप्रतिपाद्यमानोऽपि प्रतीतिगोचरीभूतः व्यञ्जना-व्यापारं विना केन बोधयितुं शक्यः। न च 'गतोऽस्तमर्कः' इत्यादिस्थले व्यंग्यार्थस्य नानाविधस्य प्रतीतिवत् लक्ष्यार्थेऽपि 'रामोऽसौ भुवनेषु', रामेण प्रियजीवितेन, 'रामोऽस्मि सर्वं सहे' इत्यादौ क्रमेण एक एव रामशब्दः खर-दूषणादिनिहन्तृत्वेन अत्यन्तनिष्करुणत्वेन सर्वदुःखसहिष्णुत्वेन प्रतीयत इति नाना-र्थबोधकः, किञ्च व्यंग्यस्थले 'त्वामस्मि' इति श्लोके त्वामित्यस्य प्रीतिपात्र-त्वाद्यर्थान्तरसंक्रमणेन यथा विशेषव्यवहारकारणत्वम् तथैवात्रापि निष्करुण-त्वादिबोधनेन विशेषव्यवहारहेतुरपि। किञ्च व्यञ्जनाभिधामूला लक्षणामूला चेति शब्दार्थायत्ता लक्षणाऽपि शब्दे आरोप्यत इति शब्दायत्ता। मुख्यार्थबाध-ज्ञाने मुख्यार्थज्ञानस्यावश्यकत्वात् अर्थायत्ता च प्रकरणादिसापेक्षत्वमुभयत्रापि तुल्यमेवेति न लक्षणाव्यञ्जनयोर्भेद इति चेदुच्यते। रामशब्देन निष्करुणत्वा-दीनां नानार्थानां प्रतीतावपि न तथा वक्तुं शक्यम्। एककाले उच्चारितराम-शब्दस्य तादृशनानार्थबोधाजनकत्वात्। 'रामोऽस्मी'त्यत्रोच्चारितरामशब्देन सर्वदुःखसहिष्णुत्वविशिष्टरामस्यैव बोधात्। 'गतोऽस्तमर्कं' इत्यादौ तु एककाल एव नानार्थप्रतीतिरिति तदपेक्षया वैलक्षण्याया वैलक्षण्यम् किञ्च 'गङ्गायां घोष' इत्यादौ तीरेण साकं सामीप्यादिसम्बन्धस्य सत्त्वाल्लक्षणेति सा नियत-सम्बन्धे एव भवति। व्यञ्जना तु 'अत्थाएत्थे'त्यादौ नियतसम्बन्धे 'कस्स वाण होइ रासो' इत्यादौ वञ्चनीयत्वाद्यनियतसम्बन्धे सम्बद्धसम्बन्धे 'विपरीअरए' इत्याद्यनुरणनरूपव्यंग्यस्थलेऽपीति व्यञ्जनालक्षणयोर्भेदोऽवश्यं वाच्य एव। अन्यथा 'अत्था एत्थे'त्यादौ लक्षणाहेतूनां मुख्यार्थबाधादीनामभावात् 'यथेष्टं मम शय्यायामेव स्वपिही'त्यर्थः कथं प्रतीयेत? किञ्च न लक्षणास्वरूपमेव ध्वननम्। लक्षणामुपजीव्य ध्वनेर्दर्शनात्। कार्यकारणयोस्तादात्म्यस्या-भावात्। लक्षणानुगतमेव ध्वननमित्यपि न वाच्यम्। 'भद्रात्मन०' इत्यादि-श्लोके अभिधामूलव्यञ्जनायाः सत्त्वात्। अवाचकानां टकारठकारादीनां रौद्रादिव्यञ्जकत्वादभिधालक्षणोभयानुसार्येवेत्यपि न वक्तुं शक्यम्। नेत्र-त्रिभागावलोकनादीनामपि व्यञ्जकत्वेन शब्दानुसारीत्यपि न शक्यते वक्तुमिति अभिधातात्पर्यलक्षणातिरिक्तः ध्वननद्योतनादिपर्यायः व्यञ्जनाव्यापारोऽवश्यमा-श्रयणीय एव। अत्र वैयाकरणाः अखण्डबुद्ध्या पदे न वर्णा विद्यन्ते वर्णेष्ववयवाः

न चे'त्युक्त्या 'वाक्यस्फोटोऽतिनिष्कर्षे सिध्यतीति मतस्थिति'रिति वाक्यस्फोटस्यैव सिद्धान्तितत्वात् अखण्डवाक्यस्य वाक्यार्थे शक्तेः सत्त्वात् वाक्यगम्ये व्यङ्ग्यार्थे शक्तिरेवेत्याहुः। परं तेषामपि मते 'शास्त्रेषु प्रक्रियाभेदैरभिवैवोपवर्ण्यते। इति 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति स्वीकारात् पदपदार्थेऽन्वयव्यतिरेकाभ्यां सूक्ष्मतया निरीक्ष्यते। 'निःशेषे'त्यादिश्लोके तदन्तिकमेव गतासीति विधेः शक्त्यानुपस्थितत्वाल्लक्षणायाश्चानवसरात् विध्यर्थप्रत्यायनाय व्यञ्जनानामिका वृत्तिरवश्यं स्वीकार्यैव। अत्र केचित्—

'योऽर्थान्तराभिव्यक्तौ वः सामग्रीसंनिबन्धनम्। सैवानुमितिपक्षे नो गमकत्वेन सम्मते'त्यादिना व्यङ्ग्यार्थस्यानुमानेनैव गतार्थत्वान्न व्यञ्जनास्वीकारस्य प्रयोजनमित्याहुः। तथाहि न खलु प्रतीतिविषयीभूतोऽर्थो वाच्यादसम्बद्धो भवति तथात्वे सर्वस्माच्छब्दात्सर्वार्थोपलब्धिप्रसंगात्। एवञ्च सम्बन्धाद्व्यञ्जकभावो व्यभिचारे नियमनेन भवतीति सपक्षसत्त्वेन पक्षसत्त्वेन विपक्षव्यावृत्तत्वेन चालिंगाद्धेतोः लिंगिनः ज्ञानं साध्यविषयकज्ञानं यत्तद्रूप एव व्यंग्यव्यञ्जकभावः पर्यवस्यति। तत्रोदाहरति। 'भम धम्मिए'ति। अत्र यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम् गोदावरीतीरञ्च सिंहवत् अतः भीरुभ्रमणायोग्यमिति भ्रमणाभावोऽनुमितावेव पर्यवस्यतीति किमर्थं व्यञ्जना पृथक् स्वीक्रियते। तत्रोच्यते—नात्रानुमानावसरः। पक्षतावच्छेदकावच्छेदेन साध्यानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन हेतुनिश्चयस्य कारणत्वेन प्रकृते हेतुनिश्चयाभात् न खलु 'यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्' इति नियमः। गुरोः स्वामिन आज्ञया, कान्तानुरागेण द्रव्यादिलाभाशया वा भीरोरपि गमनसम्भवात्। किञ्च शूरत्वेन लोकनिन्दाभयात् श्वानं हन्तुमनिच्छन्नपि सिंहमारणार्थं मयाऽवश्यं गन्तव्यमिति गमने प्रवर्तते इति विरुद्धः। किञ्च गोदावरीतीरे सिंहसत्ता न प्रत्यक्षेणानुमानाद्वा निर्णीता किन्तु पुंश्चलीवचनात्। तस्य च अर्थेन समं नियतसम्बन्धे 'नद्यास्तीरे फलानि सन्ति' इत्यादिवाक्यानां प्रामाण्यमिव प्रकृते अर्थेन समं नियतसम्बन्धाभावात् प्रामाण्यस्य वक्तुमशक्यतया हेतोः असिद्धत्वमपि। एवञ्च हेतोर्दुष्टत्वात् कथं तेन भ्रमणाभावस्य साध्यस्यानुमितिर्वक्तुं शक्या। एवं 'निःशेषे'त्यादौ उपभोगव्यञ्जकतयोक्तानां चन्दनच्यवनादीनां तत्रैवोक्तस्नानादिकारणान्तरेणापि सद्भावाद्व्यभिचारित्वेन नानुमितिसाधकत्वं वाच्यम्। अत एव व्यक्तिवादिना दूतीप्रेषणात्पूर्वं

नायकस्याधमत्वे प्रेषणस्यानुपपन्नत्वात् । तदुत्तरं कारणान्तरस्याभावेऽपि अधम इत्युक्त्याऽपरपदसहायानां चन्दनच्यवनादीनां व्यञ्जकत्वमुक्तम् । व्यञ्जनादिमते व्याप्त्यभावेऽपि व्यंग्यार्थप्रतीतेः सर्वसम्मतत्वान्नोपपत्तिप्रदर्शनावश्यकतेति सर्वमवदातम् ।

**प्र० ६—व्याख्यायतामियमुद्धृता पङ्क्तिस्तत्रेत्याशयं सुविशदीकुर्वता—'अर्थशक्तिमूलेऽपि विशेषे सङ्केतः कर्तुं न युज्यते' इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात् परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम्' इति ।**

उ० ६—अर्थशक्तिमूलयोर्वस्त्वलङ्कारयोर्वाक्यार्थविगमोत्तरगम्यताऽभिहितान्वयवादिमते वृत्त्यन्तरेणैवावगम इत्यभिदधत् अभिहितान्वयवादे व्यंग्यस्याभिधेयतां निराकरोति 'अर्थशक्तिमूले'त्यादिना अभिधेयतायाम्' इत्यन्तेन । विशेषे तत्तद्व्यक्तिविशेषे, सन्निहितवादिव्यक्ताविति यावत् । सङ्केतः सङ्केतग्रहः । न युज्यते न पार्यते शक्यते वा । आनन्त्याद्व्यभिचाराच्च व्यक्तीनाम् । यद्वा विशेषे पदार्थसंसर्गे न युज्यते । वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितैः सामान्यरूपाणां जातिरूपाणाम्, जातिरेव पदार्थ इति मीमांसकसिद्धान्तात् । पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात् । प्रतीत्यपर्यवसानमाकाङ्क्षा । अव्यवधानेनोपस्थितिः सन्निधिः । बाधाविरहो योग्यता । एतद्वशात् परस्परसम्बन्धः इत्यादिसहकारिकारणताज्ञानेन वक्ष्यमाणजातिगुणक्रियासंज्ञारूपाणामन्योन्यसम्बन्धे जनयितव्ये अपदार्थोऽपि शक्त्याऽप्रतिपद्यमानो तात्पर्याख्यवृत्तिरूपो वाच्याद्यपेक्षया विलक्षणशरीरः विशेषरूपः समुल्लसति, तत्र व्यंग्यस्य वाच्यार्थादपि दूरभावित्वादभिधेयतायाः कः प्रसङ्ग इत्यर्थः । अयं भावः—'अर्थशक्तिमूलेऽपि यतः पदेभ्यः प्रथमपदार्थस्मृतिः अथ पदार्थविशेषाणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्ययः ततो व्यंग्यप्रतीतिरिति तृतीयकक्षायां कुतोऽभिधायाः प्रसारणम् । द्वितीयकक्षायामेव तदनपेक्षणात् । यतोऽभिहितान्वयवादेऽशक्य एवान्वयः आकाङ्क्षादिवशेन प्रतीयते । 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति च सर्वं सिद्धम्' इति ।

प्र० ७—अन्विताभिधानमतं परामृशता व्याख्यायेतामिमे कारिके ग्रन्थकृत्प्रतिपादितदिशा—

'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथाऽनुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्याऽवबोधेते सम्बन्धं त्रिप्रमाणकम् ॥

उ० ७—येऽप्यन्विताभिधानवादिनः—'देवदत्तः गामानये'त्यादि प्रयोजकवृद्धवाक्यं श्रुत्वा बालः तदनन्तरं प्रयोज्यवृद्धेन सास्नादिमन्तमर्थं देशान्तरं नीयमानमालोकयन्नयमेतद्विषयकैतत्क्रियागोचरकार्यताज्ञानवान्, तद्विषयकचेष्टावत्वात्, तद्विषयकप्रवृत्तिमत्त्वाद्वा, मद्वदिति प्रयोज्यवृद्धस्य ज्ञानमनुमिमीते । ततः कारणं विना कार्यानुपपत्त्याऽखण्डवाक्यस्यान्वयव्यतिरेकिणस्तज्ज्ञानेन कार्यत्वकारणत्वरूपां शक्तिमवधारयति । अथ ज्ञेयसंबन्धं विना वाक्यस्य सः शक्तिरनुपपन्नेत्यर्थापत्त्याखण्डवाक्यार्थेनाखण्डस्य वाक्यस्य वाच्यवाचकभावरूपं सम्बन्धमवधारयति । यदुक्तं प्रश्नगतकारिकयोः 'शब्दवृद्धे'त्यादिना । त्रिप्रमाणकमिति । जात्यपेक्षया त्रित्वम् न तु व्यक्त्यपेक्षया । एवमखण्डयोः सम्बन्धमवधार्य विशेषतो व्युत्पद्यते इत्थम्—अनन्तरं तेनैव प्रयोजकेन 'चैत्र' अश्वमानय, देवदत्त गां नय' इत्यादिवाक्येषु कस्यचिदन्यपदस्याऽऽवापे कस्यचिदुद्धारे सति यस्य भागस्यान्वयव्यतिरेकाभ्यां यस्य वाक्यार्थभागस्यान्वयव्यतिरेकावुपलभते, तत्र तस्य शक्तिमवधारयति तच्च शक्त्यवधारणमन्वित एव पदार्थे, प्रथममन्वय एव वाक्यस्य शक्तिग्रहात्, पदार्थमात्रे शक्तावुपजीव्यविरोधाद्, व्यवहारेणान्वितज्ञानस्यैवोपस्थापनाच्च, न च वाक्यं विना काचिदाद्यव्युत्पत्तिः व्यवहारेणैवाद्यव्युत्पत्तेः, व्यवहारस्य च प्रवृत्तिनिवृत्तिरूपस्य पदमात्रेण कर्तुमशक्यत्वात्, अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु संकेतग्रहादन्विता एव पदशक्याः, त एव च वाक्यार्थ इति न वाक्यार्थबोधे शक्तेर्विरामः नत्वभिहितानां पदार्थानामन्वयोऽशक्य एव प्रतीयते, योग्यतादिवशादिति युक्तम् । ननु तथापि संसर्गविशेषोऽशक्य एव, पदार्थसामान्यान्वित एव शक्तिग्रहादन्यथा 'गामानये'ति पदं श्रुत्वाऽश्वमानयेत्यादिवाक्ये तदेवेदमानयपदमित्यादिप्रत्यभिज्ञा न स्यात्, पूर्वस्य गवान्वितानयनपदस्याश्वान्वितानयनेऽशक्यत्वेनार्थभेदेन भेदादिति चेन्न, पदार्थत्वेन सामान्येन विशेषाणामेवान्वये शक्तिग्रहात्, अन्वितानां च विशेषरूपत्वादित्याहुः—तेषामपि मते सामान्येनैव रूपेण

विशेष: शक्यो न तु विशेषरूपेण, तथा च पदार्थान्तरसामान्यान्वितपदानां शक्तिः, गवादिविशेषान्वितस्तु विशेषो वाच्य एव। तस्मादभिहितान्वयवादेऽनन्वित एवान्विताभिधानवादे तु पदार्थसामान्यान्वित: स्वार्थ: संकेतविषयो, गवादिविशेषान्वितानयनादिरूपस्त्वसंकेतित एवेत्यवाच्य एव वाक्यार्थ इति।

प्र० ८—'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इत्यस्य क आशयः? कथं च तन्निराक्रियते?

उ० ८—यद्यपि कैश्चिदुच्यते 'शब्दश्रवणानन्तरं यावानर्थः प्रतीयते, तत्र सर्वत्रापि शब्द एव निमित्तम्। यतो नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते' इति तदप्ययुक्तम्। शब्दस्य ह्यर्थे निमित्तत्वं कारकत्वं ज्ञापकत्वं वा। न प्रथमं शब्दस्यार्थानुत्पादकत्वात्। चरमं पुनरनुमन्यते, परन्तु संकेतत्वेन ज्ञातस्य, अज्ञातस्य स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वेऽतिप्रसङ्गात्। न चान्वयविशेषे संकेतग्रहः अस्तु विशेष एव संकेतग्रहः इति चेद्, लोष्टाद्यन्वितानयनादेर्विशेषस्योपस्थापकान्तराभावेन शब्दादेवोपस्थितिर्वाच्या। तथा च तत्र संकेतग्रहे शब्दात्तदुपस्थितिः, शब्दाच्च तदुपस्थितौ संकेतग्रहः इत्यन्योन्याश्रयात् तस्मान्नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते इत्यविचारिताभिधानम्।

प्र० ९—परामृश्यतामियमुक्तिः 'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः' इति, 'यत्परः शब्दः स शब्दार्थ' इति च 'विधिरेवात्र वाच्यः' इति।

उ० ९—अथ 'सोऽयमिषोरिवेत्यादि', 'यत्परः शब्दः स शब्दार्थः' इति च 'निःशेषे'त्यादौ विधिरेव वाच्य इति भट्टमतोपजीविनो भट्टलोल्लटादयः। अस्यार्थः—यथा बलवता प्रेरितः इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणञ्च रिपोर्विधत्ते तथा एक एव शब्द एकेनैवाभिधाव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते। अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव। किञ्च यत्र शब्दस्य तात्पर्यं स शब्दार्थ इति 'निःशेषे'त्यादौ तात्पर्यविषयतया विधिर्वाच्य एवेति। ते तात्पर्यवाचोयुक्तेस्तात्पर्यमजानन्तः पशवः (देवानां प्रियाः)। तद्वाक्यवर्त्तिपदोपस्थापित एव हि तात्पर्यमुच्यते, न प्रतीतिमात्रे। तथाहि 'भूतभव्यसमुच्चारेण भूतं भव्यायोपदिश्यते' इति सिद्धान्तः। अस्यार्थः भूतं सिद्धं, भव्यं साध्यम् तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यते इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रिया-

नुकूलतया साध्यीभूतया स्वक्रियया योगात् साध्यायमानतामाप्नुवन्तः स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या एव भवन्ति। ततश्च दहनेनादग्धमात्रं यथा दह्यते, न तु दग्धमपि, तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते, यथा ऋत्विक्प्रचरणे प्रमाणान्तरप्राप्ते 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यनेन लोहितोष्णीत्वमात्रं विधीयते, न तु ऋत्विक् प्रचरणं वा। उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्। हवनस्यान्तः सिद्धौ च 'दध्ना जुहोती'त्यनेन दध्नः करणत्वं न तु दधि, हवनं वा। एवं 'रक्तं पटं वये'त्यादौ रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वा सिद्धौ एकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च 'यावदेव विधेयं तावत्येव तात्पर्यम्, विधेयं च शब्दोपात्तमेवेति सुष्ठूक्तं शब्दोपात्त एव तात्पर्यमिति। यदि च प्रतीतमात्रे तात्पर्यं, तदा पूर्वो धावती'त्यादौ पूर्वादिसमानं संवित्संवेद्यतया प्रतीते पराद्यर्थेऽपि कदाचित्तात्पर्यं स्यात्। ननु तद्वाक्यवर्त्तिपदोपस्थापित एव तात्पर्यमिति न व्याप्तिः, 'विषं भुङ्क्ष्व, मा चास्य गृहे भुङ्क्था' इत्यत्र विषं भुङ्क्ष्वेति वाक्यस्य मा चेत्यादिवाक्यार्थेऽपि तात्पर्यादिति, मैवम्, यत एतदेकमेव वाक्यं चकारस्यैकवाक्यतासूचकत्वात्। अन्यथा तद्वैयर्थ्यप्रसङ्गात्। न चाख्यातवाच्यक्रिययोः साक्षादन्वयः सम्भवात्, 'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादि'ति न्यायात् सुहृद्वाक्यं चेदमतो भवितव्यमत्रान्वयेन, तथा च तद्वाक्यस्थपदोपस्थापित एव तात्पर्यमिति सिद्धम्। तस्माद्यत्परः शब्द इत्यादि यदुक्तं तत्तात्पर्याज्ञानात्। यदपि 'सोऽयमिषोरिवे'ति तदप्ययुक्तम्। यतः 'शब्दश्रवणानन्तरं यावानर्थः प्रतीयते' तावति सर्वत्र यदि शब्दस्याभिधैव व्यापारः स्यात्तदा 'चैत्र पुत्रस्ते जातः, कुमारी ते गर्भिणी'त्यादिवाक्यश्रवणानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधेयत्वात्। अथ तच्छब्दप्रतिपाद्ये सर्वत्राभिधा, हर्षादयस्तु न तत्प्रत्यायका इत्युच्यते तर्हि लक्षणीयेऽप्यभिधैव स्यादिति लक्षणोच्छेदः। किमिति च 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षाद्' इति सूत्रेण भगवाञ्जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयाम्बभूव। सर्वत्रैवाभिधाप्रसङ्ग उत्तरस्य दौर्बल्ये बीजाभावात्। पूर्वोक्त इषुदृष्टान्तो वैषम्यादनुपपन्नः। तथाहि तत्र वेगव्यापारस्य स्वरूपसत एव जनकतया दीर्घदीर्घतरत्वं सम्भवति अभिधायास्तु ज्ञाताया एवानुकूलत्वाद्व्यङ्ग्यनिष्ठतया चाज्ञा-

नादित्यन्वितामिधानवादेऽपि 'निःशेषे'त्यादौ विधेर्व्यङ्ग्यत्वमेवेति स्थितम् । किञ्च यदि वस्तुगत्या पदार्थान्तरेण योऽन्वितः सोऽभिधयोपस्थाप्यत इति अन्विताभिधानम्, तदाऽवश्यं व्यञ्जना स्वीकार्या । अन्यथा 'रुचिङ्कुरु' इति शब्दस्य दुष्टत्वं न स्यात् । दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात्, तदर्थस्यानन्वितत्वात् ।

**प्र० १०—यत्तु 'विषं भक्षय मा चास्य गृहे भुङ्क्थाः' इत्यत्र उपात्तस्य शब्दस्यार्थे तात्पर्यं कथं सङ्गच्छते तत्सुष्ठूपपादय ।**

उ० १०—ननूपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे इति यदुक्तं तदसङ्गतमिति पूर्वपक्षी 'विषं भक्षये'त्यत्र व्यभिचारादिति शङ्कते 'विषं भक्षये'ति वाक्यस्य 'मा चास्य गृहे भुङ्क्था' इति वाक्यार्थे तात्पर्यादुपपत्ति शब्दार्थादन्यत्र तात्पर्यं प्रसक्तमिति चैतद्वाक्यवर्तिपदोपस्थितातिरिक्तेऽपि तात्पर्यदर्शनाद् व्यङ्ग्यार्थेऽपि तात्पर्यं स्यादिति तत्परिहरति—'उच्यते' इत्यादिना । सुहृदुक्तस्य 'विषं भक्षये'त्यस्य स्वार्थेऽविश्रान्तस्य साकाङ्क्षतया समनन्तरोच्चारितेन 'मा चे'त्यादिना एकवाक्यता सा च 'च'कारेण सूच्यते । अन्यथा तद्वैयर्थ्यप्रसङ्गः । परस्परनिरपेक्षत्वेन प्रधानभूतयोः 'भक्षय भुङ्क्था' इत्येवं रूपाख्यातान्तक्रियापदार्थयोर्द्वयोरङ्गाङ्गिभावः विशेषणविशेष्यभावः न सम्भवति । 'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादि'ति न्यायेन यथा समत्वेन गुणयोः परस्परसम्बन्धस्तथा प्रधानयोरपि समत्वेनैव परस्परमनन्वयः स्यात् । अतः विषभक्षणवाक्यस्य सुहृद्वाक्येनाङ्गता कल्पनीयेति विषभक्षणं न सुहृदुपदेशयोग्यमिति 'विषं भक्षये'ति वाक्यं स्वार्थे सबाधं सत् विषभक्षणादपि दुष्टमेतद्गृहे भोजनमित्यर्थं लक्षयेत् 'मा चास्ये'ति वाक्यस्य हेतुत्वेनाङ्गतामापन्नं च सत् परस्परमेकवाक्यतां भजत इत्येकवाक्यान्तर्वर्ति पदार्थ एव तात्पर्यमिति नियमस्य (उपात्तशब्दार्थे एव तात्पर्यमिति) न व्यभिचारः तथा च स्वार्थबोधोत्तरमितरत्प्रतीयते तत्र व्यञ्जनैवेति निश्चितार्थः ।

**प्र० ११—यदि वाच्यवाचकव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयेत तर्हि का हानिरिति सोदाहरणं सुविशदं प्रतिपाद्यताम् ।**

उ० ११—'वाच्यवाचकभावातिरेकी व्यंग्यव्यञ्जकभावः' इत्यवश्यं काव्यज्ञदृष्ट्याऽपि स्वीकर्त्तव्यम्; अन्यथा कष्टत्वादयोऽनित्यदोषाः, असाधुत्वादयो नित्यदोषा इति विभागो न स्यात् । वाच्यस्यार्थस्याविशेषेण कष्टत्वादीनामपि सर्वत्र दुष्टत्वस्यादुष्टत्वस्य वा प्रसङ्गात् । व्यञ्जनाभ्युपगमे तु व्यञ्जनीयस्य बहु-

विघत्वाद्रौद्रादौ व्यंग्येऽनुकूलत्वं, शृङ्गारादौ तु दुष्टत्वमिति युज्यते विभाग-व्यवस्था। एवं पर्यायेषु मध्ये कस्यचिदेव कुत्रचित्काव्येऽनुगुणत्वमित्यपि व्यवस्था न स्यात् वाच्यार्थस्याविशेषात्। दृश्यते चासौ यथा—'द्वयं गतं सम्प्रति शोच-नीयतां समागमप्रार्थनया कपालिनः' इत्यत्र न पिनाक्यादिपदमनुकूलम्, किन्तु जुगुप्साव्यञ्जकतया 'कपालि' पदमेव। ननु द्वयमप्येतदयुक्तं, व्यङ्ग्यत्वेनाभि-मतस्य वाच्यत्वस्वीकार एवानुकूलत्वप्रतिकूलत्वयोर्व्यवस्थोपपत्तेरिति चेन्न, अभिधास्वीकारे संकेतग्रहं विना तदनुपस्थितिप्रसङ्गस्योक्तत्वात्। किञ्च काव्ये शास्त्रे वा वाच्यव्यंग्ययोः प्रतिपत्तिहेतुव्यापारभेदनिबन्धनो भेदोऽवश्यं स्वीकर्तव्यः वैधर्म्यदर्शनात्। वाच्यो ह्यर्थः सर्वैरेक एव प्रतीयते इति नियतः, व्यंग्यस्तु वक्तृप्रकरणादिवशादनियतः। तथाहि 'गतोऽस्तमर्कः' इति वाक्ये राज्ञः सेनापतीन्प्रति 'शत्रूणामाहवेनावमर्दनावसरः' इति दूतानामभिसारिकाः प्रत्यभिसरणमुपक्रम्यतामिति, सख्या वासकसज्जां प्रति 'प्राप्तप्रायस्ते प्रेयान्' इति कर्मकरस्य सहकर्म कुर्वतः प्रति 'कर्मकरणान्निवर्तामहे' इति भृत्यस्य, धार्मिकं प्रति 'सान्ध्यो विधिरुपक्रम्यताम्' इति, आप्तस्य कार्यवशेन बहिर्गच्छतः प्रति 'दूरं मा गा' इति, गृहिणो गोपालकं प्रति 'सुरभयो गृहं प्रवेश्यन्ताम्' इति, दिवसेऽतिसन्तप्तस्य बन्धून् प्रति 'सन्तापोऽधुना न भवती'ति आपणकानां भृत्यान्प्रति 'विक्रेयवस्तूनि संह्रियन्ताम्' इति, नायकाऽऽगमनप्रस्तावे प्रोषित-भर्तृकायास्तत्कथनं प्रति 'नागतोऽद्य प्रेयान्' इति, एकस्यैव वक्तुर्बहून् प्रति तत्तत्प्रकरणवशादेवमादिरनवधिर्व्यङ्ग्योऽर्थः प्रकाश्यते, वाच्यस्तु सर्वान्प्रति अविशिष्ट एव। ननु नैतद्वाच्यवैधर्म्यम् नानार्थसैन्धवादिपदे नानार्थावगतिदर्शना-दिति चेन्न। एकवाक्यवर्तिनस्तस्याप्यर्थैक्यनियमात्, यदग्रे वक्ष्यति। 'लक्षणी-यार्थस्य नानात्वेऽपि अनेकार्थपदाभिधेयवन्नियतत्वमेवे'ति। तथापि यत्र लवणा-द्यधिकारिणः प्रति सकलस्वामिनः। सैन्धवमानयेति पदप्रयोगस्तत्रानियतत्वं दुर्वारमेवेति चेन्न। तात्पर्याज्ञानात्। न ह्यत्र सर्वैर्वाच्यैः समं सर्वव्यंग्यानां भेदः प्रतिपाद्यते, किन्तु 'गतोऽस्तमर्क' इत्यस्य वाच्यव्यंग्ययोः। तथा च तद्वाच्यस्य नियतत्वं, तदर्थपुरस्कारेणैव सर्वेषां व्यंग्यस्यापि प्रतीतेः। तदयं नियतत्वानि-यतत्वरूपविरुद्धधर्मसंसर्गोऽभिहितः। एवं विलक्षणस्वरूपकालादिभेदोऽपि भेदको द्रष्टव्यः। वैधर्म्यसत्त्वेऽपि यद्यभेदः स्यात्तदा नीलपीतादेरपि न क्वचिद्भेदः स्यात् वैधर्म्यस्याविशेषात्। यदुक्तम्—'अयमेव हि भेदा भेदहेतुर्वा, यद्विरुद्ध-

धर्माध्यासः कारणभेदश्चेति । सुप्रसिद्धश्च तत्र तत्र स्वरूपभेदेऽर्थभेदः । तत्र 'नि शेषे'त्यादौ । 'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु । सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्' इत्यादौ । 'कथ-मवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्ना विद्विषां स्वीकृता श्री । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ।' इत्यादौ च स्वरूपभेदः । प्रथमे हि वाच्यो निषेधरूपो व्यंग्यस्तु विधिरूपः, द्वितीये वाच्यः संशयः प्रतीयमानस्तु शान्ते श्रृंगारिणि वा वक्तरि तदुक्तैककोटि-निश्चयः, तृतीयो वाच्यो निन्दारूपः प्रतीयमानस्तु स्तुतिरूपः, कालभेदस्तु सर्वत्र पूर्वं हि वाच्यः प्रतीयते पश्चात्तु व्यंग्य इति । वाच्यस्य तु शब्दमात्रमाश्रयः, प्रतीयमानस्य तु पदशब्दैकदेशीभूतकाकादितदर्थवर्णसङ्घटना इत्याश्रयभेदः । वाच्यस्य व्याकरणकोशादिमात्रेणावगमः, प्रीतयमानस्य तु प्रतिभानैर्मल्येनाप्य-विकेनेति ज्ञापकभेदः । वाच्येन व्युत्पन्नमात्रस्य प्रतीतिमात्रम्, अन्येन तु विदग्ध-पदवाच्यस्य सहृदयस्य चमत्कृतिरिति कार्यभेदः, गतोऽस्तमर्क' इत्यादौ दर्शित-नयेन वाच्य एकः प्रतीयमानस्तु नानेति संख्याभेदः, 'कस्स वा ण होइ' इति प्राकृतं पदम् । तस्य छाया—'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रण-मधुरम् । सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्' इत्यादौ वाच्यार्थस्य सम्बोध्या सखी विषयः, तत्र हि वाच्योऽयं श्रोतुर्व्यवतिष्ठते । प्रतीयमानस्य तु 'भ्रमरेणास्या अधरः खण्डितः, न तूपपतिनेति तत्कान्तः, 'ममैव वैदग्ध्यम्' इत्यस्य प्रतिवेशिनी, 'इदानीं मया समाहितं पुनरेव त्वया न विधेयम्' इत्यस्यो-पपतिः एवं सपत्न्यादिविषयोऽपीति विषयस्य भेदः । एवं स्वरूपादिभेदादवश्य-मङ्गीकर्तव्यो वाच्यव्यंग्ययोर्भेदः । किञ्च वाचकव्यञ्जकयोरपि वैधर्म्याद् भेदो वक्तव्यः । यतो वाचकस्य संकेतितार्थापेक्षा, संकेतिते ह्येवार्थेऽभिधा प्रवर्तते, नत्वयं व्यञ्जकः अन्यत्रापि व्यञ्जनया प्रत्ययजननात् । यच्चोक्तं—'तात्पर्यविषये शब्दः प्रमाणम्' इति तदितोऽप्यनुपपन्नम् । यतो व्यंग्यस्य वाच्यताभ्युपगमेऽपि नानार्थन्यायेन तात्पर्यादेव नियमो वाच्यः, अन्यथा सर्वत्र सर्वव्यंग्यप्रतीति-प्रसंगात् । तथा च यत्र 'वाणीरकुडङ्ग०' इत्यादौ व्यंग्यप्रतीतावपि वाच्य एव चारुत्वविश्रामस्तत्र तात्पर्याविषयो व्यङ्ग्योऽर्थः कथं प्रतीयते । 'यत्परः शब्दः' इत्युक्तमते तु सुतराम् । एतेन तात्पर्यमेव व्यङ्ग्यप्रतीतौ व्यापारः इत्यपि निरस्तम् । तस्मात्तात्पर्यमभिधा वा न प्रतीयमानेऽर्थे व्यापारः ।

प्र० १२—ननु लक्षणानुगतत्वं व्यञ्जनायाः कुतो न ?

उ० १२—नन्वस्तु लक्षणा। नहि वाच्यवल्लक्ष्योऽपि व्यवस्थितो विशेषव्यपदेशाहेतुर्वा। यतो 'रामोऽस्मि सर्वं सहे' इत्यत्र 'राम'पदेन सर्वदुःखभाजनत्वं, 'प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा' सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः व्यर्थं सम्प्रति बिभ्रता धनुरिदं लब्धापदां साक्षिणा रामेण प्रियजीवितेव तु कृतं प्रेम्णः प्रिये नोचितम्।' इत्यत्र कातरत्वम्, 'रामोऽसौ भुवनेषु विक्रमगुणै'रित्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते। अतो रामपदलक्ष्य एवानेको भवति, अर्थान्तरसङ्क्रमितवाच्यादिविशेषव्यपदेशहेतुश्च भवति। एवमन्यत्रापि स्यात्। तदुक्तं—'भक्तिमार्गस्तदन्यः' इति लक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षेण शक्यार्थेन स्यादतो नाऽत्यतिरिक्तः प्रतीयमानो नाम। नैवम्। लक्षणीयस्य नानात्वेऽपि हि नानार्थसैन्धवादिपदाभिधेयस्यैव नियतत्वमेव। न खल्वनियतसम्बन्धो मुख्येनार्थेन लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिवशेन नियतसम्बन्धोऽनियतसम्बन्धः सम्बद्धसम्बन्धश्चेति तत्स्वरूपं सोदाहरणमग्रे प्रदर्शयिष्यते। किञ्च 'अत्ता एत्थ णिमज्जई'त्यादौ विवक्षितान्यपरवाच्ये कथं लक्षणा, मुख्यार्थबाधाभावात्। ननु तत्रापि तात्पर्याधीनान्वयानुपपत्तिश्छत्रिणो यान्तीत्यत्रेवेति चेन्न। लक्षणायां प्रयोजननियमात्। तस्य च व्यापारान्तरागम्यत्वात् तदर्थं व्यञ्जनास्वीकारे किं प्रथमयापि लक्षणया। अथ निरूढलक्षणायामिवान्यत्राप्यस्तु प्रयोजनानपेक्षेति चेन्न। यथाहि सङ्केतग्रहसापेक्षाऽभिधा, तथा मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरस्य मुख्यार्थसङ्केतग्रहणापेक्षा सा। अत एवा'भिधापुच्छभूता से'त्याहुः। किञ्च न लक्षणाव्यञ्जनयोरभेदः, लक्षणामुपजीव्य तद्दर्शनात्। नापि लक्षणानुगतमेव ध्वननमिति ध्वनेस्तल्लक्षणमिति वाच्यम् अभिधोपजीवनेनापि भावात्। न च लक्षणाभिधोभयानुसार्येव। वर्णमात्रानुसारेणापि हि दृश्यते रसादिव्यञ्जना। न च वर्णमात्रे लक्षणाऽभिधा वा। सापि शब्दानुसार्येव। विकसन्नर्तकीनेत्रत्रिभागावलोकनादिगतत्वेनापि प्रसिद्धेः। तस्मादभिधा-लक्षणा तात्पर्यविलक्षणस्तुरीयो ध्वननव्यञ्जनद्योतनप्रकाशनादिपर्यायो व्यापारोऽनपह्नवनीय एव। तत्र 'अत्ता एत्थ णिमज्जई'त्यादौ व्यङ्ग्याऽर्थो नियतव्यङ्ग्यप्रतीत्योरेकविषयतात्मकत्वम्, प्रथमे तस्य भावः पथिकरूपैकविषयकत्वात्। द्वितीये तु तद्भावः, सखी-

तत्कान्तादिविषयभेदादिति केचित् । तत्र सम्यगामाति, लक्ष्यस्य नियतसम्बद्धत्वमेव, व्यङ्ग्यस्य तु तथात्वान्यथात्वं केति पूर्वप्रतिपादितस्य हीदमुदाहरणमिति लक्ष्यसाधारणं नियतसम्बद्धत्वं वाच्यम् । न चोक्तं तथा भवति । अन्ये तु प्रथमे सर्वेषामेव सत्यताप्रतीतिः, द्वितीये तु कान्तस्यैव सत्यतया, अन्येषां त्वसत्यतयेति नियताऽनियतसम्बद्धत्वमित्याहुः । तदपि न मनोरमम् । यतः एवं वाच्यप्रतीतेरेव सत्यताऽसत्यताप्रतीतिविषयत्वरूपं वैलक्षण्यमुच्यते, न तु व्यंग्यप्रतीतेः । तस्मान्नियतसम्बन्धत्वं तेन वाक्येन सह ज्ञाप्यत्वरूपसम्बन्धनियमः ( शय्याप्रवेशरूपे व्यङ्ग्ये तदप्रवेशरूपस्य वाच्यस्य विरोधसम्बन्धोऽस्ति । स च प्रसिद्धतया क्लृप्त इति नियतत्वम् । द्वितीये नायकेनावगते भ्रमरेणास्या आस्यं दष्टं तत्तूपपतिना व्यङ्ग्यार्थे । विनीतत्वरूपवाच्यार्थस्य न कोऽपि प्रसिद्धसम्बन्धोऽस्ति इति कोऽपि कल्पनीय इत्यनियतत्वम् । ) इति युक्तमुत्पश्यामः । सम्बद्धसम्बन्धो यथा 'विवरीअरए०' इति प्राकृतं पद्यम् । अस्य छाया—'विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् । हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति' इति । अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वं तन्निमीलनेन सूर्यास्तसमयस्तेन पद्मसङ्कोचस्ततो ब्रह्मणस्स्थगनं तस्मिन्सति गोपनीयांगस्यादर्शनेनानियन्त्रणं निधुवनविलसितमिति सम्बद्धसम्बन्धानि द्योतयन्ते ।

**प्र० १३—व्यञ्जनाविषये वेदान्तिवैयाकरणानां मतमनूद्य खण्डयत ।**

**उ० १३**—वेदान्तिनस्तु–क्रियाकारकादिपुरस्कारेण शब्दानां प्रवृत्तिधर्मधर्मिभावमपुरस्कृत्य न सम्भवति; धर्मधर्मिभावश्च प्रपञ्चगोचरो वा स्याद्, ब्रह्मगोचरो वा । नाद्यः प्रपञ्चस्य बाध्यत्वात् ) संसारस्य मिथ्यात्वेन धर्मधर्मिभावश्च न सम्भवति ), नान्त्यः ब्रह्मणो धर्मशून्यत्वात् । अतः पदपदार्थविभागमन्तरेणैव 'सत्यं विज्ञान'मित्यादि वाक्यमखण्डमेवाऽखण्डब्रह्मवाचकमित्यातिष्ठन्ते । अतस्तन्मतानुसारेण प्रतीयमानेऽपि वाच्यस्य शक्तिरेव ( पदपदार्थविभागमन्तरेणैव 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादि महावाक्यखण्डमेव अखण्डं ब्रह्म बोधयति इति वेदान्तमतानुसारेण व्यंग्येऽपि वाक्यगम्ये वाक्यस्य वाच्यस्य वा शक्तिरेवेति पूर्वपक्षः ) इत्यपि न वाच्यम् । यतो व्यवहारे मार्गे तैरपि पदपदार्थकल्पना अवश्यमंगीकर्तव्या । व्यवहारे तेषां भट्टनायस्वीकारात् । यदि च पदार्थकल्पना अविद्यादशायामपि नांगीक्रियते, कुतस्तर्हि व्युत्पन्नाऽव्युत्पन्नविभागव्यवहारः ? वाक्यार्थ एव-

वाक्यस्य सङ्केतग्रहमाश्रित्येति चेन्न। वाक्यार्थस्यापूर्वत्वेनाऽऽनन्त्यात्तत्र सङ्केतग्रहस्याशक्यत्वात्। अविद्या मार्गतिरस्कारे च कथमखण्डयोरपि वाच्यवाचकभावः पारमार्थिकभेदाभावात्। तस्मात् तन्मतेऽपि दिव्यादिर्व्यङ्ग्य एव।

प्र० १४—व्यञ्जनाविषये महिमभट्टमतमनूद्य खण्डयत।

उ० १४—महिमभट्टास्तु न तावदसम्बद्ध एव वाक्यात्प्रतीयते, सर्वस्मात्सर्वोपलब्धिप्रसंगात्। सम्बन्धाच्च व्यंग्यव्यञ्जकभावो भवन्नानियताद्भवतीति प्रतिबद्धरूपादेव भवतीत्याख्येयम्। सम्बद्धोऽप्यर्थो न स्वाधिकरणत्वेनाऽज्ञाते व्यङ्ग्यं प्रतिपादयति, सर्वत्र तत्प्रतीतिप्रसंगात् एवञ्च व्यंगयव्यञ्जकभावोऽनुमेयानुमापकभाव एव पर्यवसन्नः। यतो व्याप्तत्वेन सकलपक्षनिष्ठत्वेन च सपक्षसत्त्वविपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवती लिंगाल्लिंगिज्ञानमेवानुमानम्। तदेतदुक्तम् 'अनुमानं तत्तद्रूपः' इति (अनुमित्यात्मको व्यङ्ग्यव्यञ्जकभावः पर्यस्यति) तेनानुमानेन रूप्यते न त्वतिरिक्तया व्यक्त्येति तस्यार्थः। एवमनुमानादेव व्यंग्यप्रतीतिः। तथाहि—'भम धम्मिअ०' इति प्राकृतं पद्यम्। छाया तु 'भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन। गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन' इति। सङ्केतनिकेतनीभूतं गोदावरीनिकुञ्जं पुष्पावचयादिहेतोः कदाचित्सञ्चरतो धार्म्मिकस्य निवारणायाऽविनयवत्या इयमुक्तिः। तदत्र निकुञ्जवासिसिंहकृतया श्वनिवृत्त्या गृहे भ्रमणाविधिर्वाच्यः स एव निकुञ्जभ्रमणायोग्यतानुमित्यै प्रभवति (अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्, निकुञ्जे च सिंहोपलब्धिरितिव्यापकविरुद्धोपलब्धौ पर्यवसानात्। अत्र भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः तद्विरुद्धं भयकारणम् तदुपलब्धिः (अनेन व्यतिरेकव्याप्तिर्दर्शिता भवति, तथा च 'गोदावरीतीरं भीरुभ्रमणाऽयोग्यं सिंहवत्त्वाद् यन्नैवं तन्नैवं यथा गृहम्') अनुमानं चैवं 'गोदावरीनिकुञ्जं श्वभीरुभ्रमणायोग्यं सिंहवत्त्वाद्'। अत्रोच्यते—श्वभीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यम्, वीरस्वभावस्य वा, विशेषौदासीन्येन, तत्सामान्यस्यैव वा। आद्ये व्यभिचारः, तादृशस्यापि प्रभोर्गुरोर्वा निदेशेन, प्रियानुरागेण, निधिलाभादिशङ्कया वा तत्र भ्रमणदर्शनात्। अत एव नान्त्योऽपि।

मध्यमे तु विरोधः स्पर्शादिशङ्कयाऽगोरुषेयता भवतो बिभ्यतोऽपि मृगयादिकुतूहलेन सिंहवद्देशे वीरस्य भ्रमणदर्शनात्। किञ्चात्र पक्षे सिंहसद्भावो न मानान्तरेणावधारितः किन्तु पुंश्चलीवाक्यादवगतः। न च तद्वचनं निश्चायकम्, अर्थेन समं सम्बन्धानियमादित्यनिश्चयरूपाऽसिद्धिः। एवं 'निःशेषच्युतचन्दने'त्यादौ चन्दनच्यवनादीनि उपभोगव्यञ्जकतयोपात्तानि। न च तानि तद्व्याप्यानि कारणान्तरतोऽपि सम्भवात्। अत एवात्र स्नानकार्यत्वेनोपात्तानि। अतोऽनैकान्तिकत्वात् कथमनुमितिः स्यात्। ननु व्यक्तिरपि कथम्? तैरिति चेत् अधमपदसाहित्यादिति ब्रूमः। अस्माकमपि तत्साहित्येनानैकान्तिकताव्यतिरेक इति चेद्, भवेदप्येवं यद्यधमत्वं प्रमाणावधारितं भवेत् न त्वेवमस्ति। व्यक्तिरपि कथं तादृशाद्भवेदिति चेद्, धिङ् मूर्ख, व्यञ्जनायां न व्याप्तेर्नापि पक्षधर्मताया निर्धारणमंगं किन्तु सम्भावितादप्येवंविधोऽर्थः प्रतीयत इति मूकीभव।

इति पञ्चमोल्लासः।



# अथ षष्ठोल्लासः

प्र० १—ग्रन्थसन्दर्भपुरःसरं व्याख्यायन्तां निम्नोद्धृतपद्यानि—

रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥

उ० १—'यद्यपि शब्दचित्रार्थचित्ररूपभेदद्वयं प्रथमोल्लासे एव दर्शितम्, तत्भेदाश्चालङ्कारप्रभेदप्रदर्शनेन दर्शिता भविष्यन्ति' इति न कश्चिदस्ति तत्र प्रदर्शनीयम्, तथापि प्रदर्शितभेदद्वयमेव तावदनुपपन्नं शब्दार्थालङ्कारयोरन्योऽन्यनैरपेक्ष्येणानुपलम्भात् । तत्राहुः—शब्दार्थालङ्कारयोरेकैकमात्रावस्थानपुरस्कारेण नायं विभागः किन्तु प्राधान्यपुरस्कारेण । तथा च प्रथमोल्लासे 'स्वच्छन्दोच्छलित' इति पद्ये नद्यन्तराधिक्यरूपेण व्यतिरेकालङ्कारेणार्थस्य चित्रत्वम् 'विनिर्गतमि'त्यादौ च 'मानमात्ममन्दिरात्' इति मकारस्यासकृदावृत्त्या वृत्त्यनुप्रासेन शब्दस्य चित्रत्वमस्ति तथापि तत्र काव्ये चित्रार्थशब्दयोः चित्रौ च तावर्थशब्दौ च तयोः गुणत्वेन प्राधान्येन चावस्थानम्-तदुक्तं 'न तु शब्दचित्रेऽर्थस्याचित्रत्वम् अर्थचित्रे च शब्दस्य' इति । अतः पूर्वोक्तोदाहरणद्वये 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेनात्र—रूपकादिरित्यादिना । शब्दालङ्काराणामर्थालङ्काराणां च चमत्कारप्रयोजकत्वे प्रामाणिकसम्मतिमाह—तस्य काव्यस्य रूपकादिः रूपकोपमादिरेव (अर्थालङ्कार एव) अलङ्कारः अन्यैः कैश्चिदालङ्कारिकैः बहुधा बहुप्रकारः उदितः उक्तः । अर्थस्य विभावादिरूपस्य रसव्यञ्जकत्वेनार्थनिष्ठो रूपकादिरेवालङ्कारः मुख्यस्य रसादेरुत्कर्षकत्वात् । शब्दालङ्काराणां तु विभावाद्युपनयनमात्रप्रयोजकशब्दधर्मतया न मुख्यालङ्कारत्वम्, तत्र व्यतिरेकदृष्टान्तमाह—'न कान्तम्' इत्यादि । यथा वनिताया आननं मुखं कान्तमपि सलावण्यमपि निर्भूषं निरलङ्कारं सत् न विभाति नाह्लादाय पर्याप्तं

तथा शब्दार्थशरीरं ( काव्यस्य ) सगुणमपि निरलङ्कारं न विभाति । विभावादित्वेन प्राधानामर्थानामेव रसत्वमिति तेषां परिष्करणमुचितम् । अर्थं प्रत्याय्योपक्षीणानां शब्दानामलङ्कारस्यानादरणीयत्वात् । द्वितीये पद्ये 'रूपकादिमि'-त्यादिना सार्धपद्येन 'शब्दालङ्कार एवादरणीयो न त्वर्थालङ्कारः' इति केषाञ्चिदालङ्कारिकाणां मतमाह । परेऽन्ये ( केचिदालङ्कारिकाः ) रूपकादिमर्थालङ्कारं बाह्यं काव्यार्थप्रतीत्युत्तरवर्तिनीम् आचक्षते कथयन्ति । शब्दश्रवणानन्तरं शब्दालङ्कारेण चित्ते आकृष्टे अर्थप्रतीत्यनन्तरं हि रूपकाद्यनुसन्धानमिति तेषां बाह्यत्वम् । यतस्ते सुपां तिङां सुबन्तानां तिङन्तानां च पदानां व्युत्पत्ति विशेषेणानुप्रासादिरूपेणोत्पत्ति ( विशेषेण उत्पत्तिः व्युत्पत्तिः ) संनिवेशं वाचामलङ्कृति शब्दालङ्कारं वाञ्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्तीत्यर्थः । तस्या एवालङ्कृतित्वे हेतुमाह—तदेतदाहुरिति । सौशब्द्यं शोभनशब्दस्य काव्यस्य शोभनत्वं स्वत एव शब्दालङ्काराणां चमत्कारित्वमेव । अर्थव्युत्पत्तिः अर्थालङ्कारः नेदृशी न शब्दवत् स्वतश्चमत्कारिका अपि तु विभावाद्युत्कर्षमुखेनैवेत्यर्थः । शब्दैरभिव्यज्यमानानामास्वादानां विभावादिभिरर्थैरुपचायनम् ते च ( शब्दाश्च ) माधुर्यादिव्यञ्जकवर्णघटितानुप्रासादिमत्तया रचिता एव तद्व्यञ्जने प्रभवन्ति तेन शब्दालङ्काराणामावश्यकता पश्चाद्भवानामर्थालङ्काराणामकिञ्चित्करता तैर्विनापि शब्दालङ्कारैरास्वादानामभिव्यक्तेः । तदेवाह बाह्यमिति । 'आस्वादोत्पत्तिदशायां तदनुपलम्भात्' इति । अधुना 'शब्दाभिधेये'-त्यादिना स्वसिद्धान्तमाह—ग्रन्थकृत् । अभिधेयः अर्थः । यद्वा अभिधेयः प्रतिपाद्यः तेन लक्ष्यव्यङ्ग्ययोरपि सङ्ग्रहः । 'तु'शब्दः पुनरर्थे । तथा च नः अस्माकं तु शब्दाभिधेयालङ्कारभेदात् शब्दार्थालङ्कारयोर्भेदात् द्वयं शब्दार्थालङ्कारयुगलम् इष्टम् अभिमतमित्यर्थः । इदमत्राकूतम् । नहि शब्दे स्वरूपेणालङ्कारः निरर्थकेऽपि तदापत्तेः । नाप्यर्थे सर्वदार्थसत्त्वेन तदापत्तेः । किन्तु शब्दबोधितेऽर्थेऽर्थबोधके शब्दे च चित्रता । अत एव द्वे काव्ये तेन द्वयोरप्यास्वादोपकारकत्वस्य सहृदयकवेद्यत्वात् कविसंरम्भगोचरत्वाच्च द्वावप्यलङ्कारौ । इति ।

इति षष्ठोल्लासः ।

---

# अथ सप्तमोल्लासः

**प्र० १—दोषसामान्यस्य लक्षणं प्रतिपाद्य सोदाहरणम् सोपपत्तिकान् पदगतान् दोषान् प्रतिपादयत ।**

उ० १—'उद्देश्यप्रतीतिविघातको दोषः' इति दोषसामान्यस्य लक्षणम् । षोडश पददोषाः सन्ति । श्रुतिकटु १—श्रुतौ कटु यद् भवति तत् श्रुतिकटूच्यते । यथा-'अनंगमंगले'त्यादिपद्ये 'कार्तार्थ्यम्' इति श्रवणे कटु विद्यते । च्युतसंस्कृति २—व्याकरणलक्षणहीनं यद् भवति तत् पदं च्युतसंस्कृतीत्युच्यते । यथा—'एतन्मन्दविपक्वे'त्यादिपद्ये 'अनुनाथते' इति पदम् 'आशिषि नाथः' इति वार्तिकविरुद्धत्वाच्च्युतसंस्कृतिः । अप्रयुक्तम् ३—तथा पठितमपि कविभिर्नादृतम् । यथा—'यथायं दारुणाचार' इत्यादिपद्ये 'दैवत'शब्दः पुंसि पठितोऽपि यथा 'दैवतानि पुंसि वा' इत्यत्र पुंसि कविभिर्न प्रयुज्यते । असमर्थम् ४—शक्तिरहितं यस्मिन्नर्थे पठितस्तं प्रतिपादयितुमशक्तम् । यथा—'तीर्थान्तरेषु स्नानेन' इत्यत्र 'हन्ति'पदम् । हन्धातुर्गमनार्थे पठितोऽपि तदर्थप्रतिपादनेऽशक्तः । निहतार्थम् ५—उभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम् । 'यावकरसार्द्र' इत्यत्र 'शोणित'शब्द उज्ज्वलीकृतरूपेऽर्थे निहतार्थः । अनुचितार्थम् ६—'तपस्विभिर्या' इत्यत्र पशुपदं कातरताभिव्यञ्जकत्वादनुचितार्थकम् । निरर्थम् ७—पादपूरणमात्रप्रयोजनकम् । यथा—'उत्फुल्लकमलकेसर' इत्यत्र 'हि'पदम् । अवाचकम् ८—यथा—'अवन्ध्यकोपस्ये'त्यादिपद्ये 'जन्तु'पदमदातर्यर्थे प्रयुक्तं परन्तु तदर्थे जन्तुपदस्य शक्तिरेव नास्ति । अश्लीलम् ९—श्रीरस्यास्तीति श्रीलं सिध्यादित्वान्मत्वर्थीयो लच्प्रत्ययः । रलयोरभेदात् श्लीलं, न श्लीलम् अश्लीलम् । अथवा श्रियं लातीति श्रीलम् । स त्रिविधो व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात् । 'साधनं सुमहद् यस्य', 'लीलातामरसाहतः' 'मृदुपवनविभिन्नः' इत्यादीनि क्रमेणोदाहरणानि बोध्यानि । उक्तेषु त्रिषूदाहरणेषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः । संदिग्धम् १०—यथा-'आलिंगितस्तत्र भवान्' इत्यत्र वन्द्यामिति पदे बन्दीभूतायामुत वन्दनीयामिति संशयः । अप्रतीतम् ११—यत्केवले शास्त्रे प्रसिद्धम् । यथा—'सम्यग्ज्ञाने'त्यादिपद्ये आशयशब्दो वासनार्थो योगशास्त्रादावेव प्रयुक्तः । ग्राम्यम् १२—लोक एव प्रसिद्धम् । यथा—'राकाविभावरी'त्यादिपद्ये कटि-

पदम् । नेयार्थम् १३—रूढिं प्रयोजनं विना शक्यसम्बन्धमात्रेणाशक्यार्थोपस्थानम् । यथा—'शरत्कालसमुल्लासि' इत्यत्र चपेटाताडनेन निर्जितत्वं लक्ष्यते । क्लिष्टम् १४—यतोऽर्थप्रतीतिर्व्यवहिता । यथा—'अत्रिलोचनसम्भूते'त्यादिपद्येऽत्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमनेन भासिभिः कुमुदैरित्यर्थो व्यवहितत्वात् क्लिष्टः। अविमृष्टविधेयांशम् १५—अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् । यथा—'मूर्ध्नामुद्वृत्तकृत्ते'त्यादिपद्ये मिथ्यामहिमत्वं नानुवाद्यमपि तु विधेयम् । विरुद्धमतिकृत् १६—विरुद्धा चासौ मतिश्च, तां करोतीति विरुद्धमतिकृत् । यथा—'न त्रस्तं यदि नाम भूतकरणे'त्यादिपद्ये भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति । भवस्य स्त्री भवानी तस्याः पतिरिति रीत्या भवानीपतिशब्दः यज्ञदत्तपत्न्याः पतिरितिवत् पत्यन्तरप्रतीतिं करोति एषु प्रारम्भिकास्त्रयोदश दोषाः केवलपदगताः समासगताश्च । अन्ये क्लिष्टादयस्त्रयस्तु समासगता एव ।

**प्र० २—पदांशदोषान् सोदाहरणान् प्रतिपादयत ।**

उ० २—श्रुतिकटु—'तद् गच्छ सिद्ध्यै' अत्र 'द्ध्यै' इति कटु । 'यश्चाप्सरो विभ्रम' इत्यादिपद्ये मत्ताशब्दः क्षीबार्थे निहतार्थः । 'आदावञ्जनपुञ्ज'-त्यादिपद्ये दृशामिति बहुवचनं निरर्थकम् । 'चापाचार्यस्त्रिपुरविजयी'त्यादिपद्ये विजेय इति कृत्यप्रत्ययः क्तप्रत्ययेऽवाचकः । 'अतिपेलवमतिपरिमितवर्णम्' 'यः पूयते' 'विनयप्रणयैककेतनम्' एषु पेलवपूयप्रेतशब्दाः क्रमेण व्रीडादिव्यञ्जकाः । 'कस्मिन् कर्मणि' इत्यादिपद्ये किं पूर्वं साधुः उत साधुषु चरतीति सन्देहः । 'किमुच्यतेऽस्ये'त्यादिपद्ये वच.शब्देन गोः शब्दो लक्ष्यते ।

**प्र० ३—साधारणान् वाक्यगतान् दोषान् सोदाहरणान् प्रतिपाद्यासाधारणान् वाक्यगतान् सोदाहरणान् दोषान् प्रतिपादयत ।**

उ० ३—च्युतसंस्कारमसमर्थं निरर्थकञ्चेति त्रीन् दोषान् विहाय त्रयोदशः दोषाः पूर्वमुक्ता वाक्येऽपि भवन्ति । 'सोऽध्यैष्ट', 'स रातु' 'सायकसहायवाहोः' 'कुविन्दस्त्वम्' 'प्राभ्रभ्राड्' 'भूपतेरुपसर्पन्ती' 'तेऽन्यैर्वान्तिम्' 'पितृवसतिमहं व्रजामि' 'सुरालयोल्लासपरः' 'तस्याधिमात्रोपायस्य' 'ताम्बूलभृतगल्लोऽयम्' 'वस्त्रवैदूर्यचरणैः' 'धम्मिल्लस्य न कस्य' 'अपाङ्गसंसर्गितरङ्गितम्' 'श्रितक्षमा रक्तभुवः' इत्यादिषु श्रुतिकटु-अप्रयुक्त-निहतार्थ-अनुचितार्थ-अवाचक-व्रीडा-जुगुप्सा-अमङ्ग-

श्लील-संदिग्ध-अप्रतीत-ग्राम्य-नेयार्थ-क्लिष्ट-अविमृष्टविधेयांश-विरुद्धमति-कृद्दोषाः क्रमेण बोध्याः ।

प्रतिकूलवर्णम् १—रसप्रतिकूला यत्र वाक्ये वर्णा भवेयुस्तत्, यथा—'अकुण्ठोत्कण्ठया' इत्यत्र । उपहतलुप्तविसर्गम् २-३—उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत्, यथा 'धीरो विनीत.' इत्यादौ । विसन्धि ४—विश्लेषः, सन्धौ अश्लीलत्वं, सन्धौ कष्टता वा 'तत उदित उदारहारहारि' 'वेगादुड्डीय गगने' 'उर्व्यसावत्र तर्वाली' इत्यादीनि क्रमेण विसन्ध्युदाहरणानि । हतवृत्तम् ५—हतं वृत्तं यत्र तत्—लक्षणानुसरणेऽप्यश्रव्यम्, न प्राप्तो गुरुभावोऽन्ते लघुना यत्र तत्, रसाननुगुणं वेति त्रिविधं हतवृत्तम् । यथा—'अमृतममृतम्' इत्यादिपद्ये हरिणी-छन्दः तस्मिंश्च प्रतिपादं षष्ठाक्षरे यतिरुचिता । परन्त्वत्र चतुर्थपादे 'हा' इति षष्ठाक्षरे परपदानुसन्धानापेक्षत्वेन यतिभङ्गादश्रव्यत्वम् । 'विकसितसहकारतार-हारि' अत्र हारिशब्दोऽप्राप्तगुरुभावान्तलघुरस्ति । 'हा नृप हा बुध' इत्यादौ हास्यानुकूलं दोधकवृत्तं विपरीतम् । न्यूनपदम् ६—'तथाभूतां दृष्ट्वा' इत्यत्रा-स्माभिः 'खिन्ने' इत्यस्मात् पूर्वमित्थमिति च न्यूनम् । अधिकपदम् ७—यथा—'स्फटिकाकृतिनिर्मलः' इत्यत्राकृतिशब्दः । कथितपदम् ८—'अधिकरतलतल्पम्' इत्यादौ लीलाशब्दः । पतत्प्रकर्षम् ९—पतत् ह्रसन् प्रकर्ष उत्कर्षो यत्र वाक्ये तत् । अलङ्कारकृतस्य बन्धकृतस्य वा प्रकर्षस्य यत्रोत्तरोत्तरं पातः । 'कः कः कुत्र न' इत्यादिपद्ये यथा । समाप्तपुनरात्तम् १०—समाप्तमथ च पुनरात्तम् । यथा—'क्रेङ्कारः स्मरकार्मुकस्य' इत्यत्र 'तनोतु वः' इति समाप्तमेव वाक्यं न वेत्यादिविशेषणेन पुनरुपादीयतेऽतः समाप्तपुनरात्तम् । द्वितीयार्धगतमेकवाचकशेष-प्रथमार्धम् ११—द्वितीयार्धगतमेकं वाचकं शेषम् अवशिष्टं यस्य तादृशं प्रथमार्धं यत्रवाक्ये । यथा—'मसृणचरणपातम्' 'भूः सदर्भा' तत् तस्मात् 'मसृणचरण-पातं गम्यताम्' इति वाक्यं द्वितीयार्धगतेन तदित्यनेन पूर्यते । अभवन्मतयोगम् १२—अभवत् मतः ( इष्टः ) योगः ( सम्बन्धः ) यत्र । यथा—'त्वमेव सौन्दर्या' इत्यादौ यदित्यत्र तदिति तदानीमित्यत्र च यदेति वचनं नास्ति । अनभिहित-वाच्यम् १३—अवश्यवक्तव्यमनुक्तं तत्र । यथा—'त्वयि निबद्धरते'त्यादौ अपराधस्य लवमपीति वाच्यम् । अस्थानस्थपदम् १४—अस्थानेऽयोग्यस्थाने तिष्ठतीति अस्थानस्थम् । अस्थानस्थं पदं यत्र । यथा—'प्रियेण संग्रथ्य' इत्या-दिपद्ये 'काचिन्न विजहौ' इति वाच्यम् । अस्थानस्थसमासम् १५—यथा—

'अद्यापि स्तनशैलदुर्गविषमे' इत्यादिपद्ये कुद्धस्य चन्द्रमस उक्तौ समासो न कृतः कवेरुक्तौ तु कृतः। सङ्कीर्णम् १६—यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति। यथा—'किमिति न पश्यसि कोपम्' इत्यादौ पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं कण्ठे गृहाणेत्यादिकं बोध्यम्। गर्भितम् १७—यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति। यथा—'लग्नं रागावृताङ्ग्या' इत्यादौ 'विदितं तेऽस्तु' एतत् प्रयोजनं विनैव गर्भितं कृतम्। प्रसिद्धिहतम् १८—प्रसिद्धिमतिक्रान्तम्। 'मञ्जीरादीषु रणितप्रायं पक्षिषु च कूजितप्रभृति। स्तननितमणितादि सुरते मेघादिषु च गर्जितप्रमुखम्'॥ इयं प्रसिद्धिर्बोध्या। यथा—'महाप्रलयमारुते'त्यादौ सिंहनादे रवः। भग्नप्रक्रमता १९—भग्नः प्रक्रमः प्रस्तावो यत्र तस्य भावः। यथा—'गाहन्तां महिषा' इत्यादिपद्ये गाहन्तामिति कर्तृतिङः प्रक्रमात् क्रियन्तामित्यत्र तद्भङ्गः। अक्रमः २०—अविद्यमानः क्रमो यत्र। यथा—'लग्नं रागावृताङ्ग्या' इत्यादौ 'इति श्रीनियोगात्' इति वाच्यम्। अमतपरार्थम् २१—अमतः प्रकृतविरुद्धः परार्थो यत्र। यथा—'राममन्मथशरेण' इत्यादिपद्ये ताटकामरणप्रकरणे बीभत्सरसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः।

प्र० ४—अर्थदोषान् प्रतिपाद्योदाहरणेषु सङ्गमयत।

उ० ४—त्रयोविंशतिरर्थदोषाः सन्ति। अपुष्टः १—मुख्यार्थानुपकारी यथा—'अतिविततगगनसरणी'त्यादिपद्ये अतिविततत्वादयो मुख्यार्थं नोपकुर्वन्ति। कष्टः २—दुरूहः। यथा—'सदा मध्ये यासामि'त्यादौ यासां कविरुक्तीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति, ताः गम्भीरकाव्यपरिनिष्ठिताः कवयितरकाव्यवत् प्रसन्ना भवन्त्वित्यादिरर्थो दुरूहः। व्याहतः ३—पूर्वं कस्यचिदपकर्षमुत्कर्षं वा प्रतिपाद्य पुरस्तदन्यथाकरणम्। यथा—'जगति जयिनस्ते ते' अत्र यं माधवमन्यतोऽन्दुकलादयस्तुच्छभावाः स माधव एव मालत्यामुत्कर्षं चन्द्रिकात्वमारोपयति। पुनरुक्तः ४—शब्देन ज्ञातः पुनस्तेनैव प्रतिपादितः। यथा—'अस्त्रज्वालावलीढे'त्यादौ चतुर्थपादवाक्यार्थः पुनरुक्तः। दुष्क्रमः ५—दुष्टः अनुचितः क्रमो यत्र। यथा 'भूपालरत्ने'त्यादौ मातङ्गस्य प्राङ्निर्देशो युक्तः। ग्राम्यः ६—ग्रामे भवः यथा—'स्वपिति यावदयं निकटे जन' इत्यत्र रिरंसायाः स्पष्टकथनम्। सन्दिग्धः ७—यथा—'मात्सर्यमुत्सार्ये'त्यादिपद्ये प्रकरणाभावात् सन्देहः। निर्हेतुः ८—निष्क्रान्तो हेतुर्यस्मात् हेतुरहित इत्यर्थः। यथा—'गृहीतं येनासीः' इत्यादि-

पद्ये शस्त्रत्यागे हेतुर्न गृहीतः। प्रसिद्धिविरुद्धः ९—यथा—'इदं ते केनोक्तम्' इत्यत्र कामस्य चक्रं लोकेऽप्रसिद्धम्। विद्याविरुद्धः १०—यथा—'सदा स्नात्वा निशीथिन्यामि'त्यादौ ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रे निषिद्धम्। अनवीकृतः ११—एकप्रकारेणैव निर्दिष्टः यथा—'प्राप्ताः श्रियः सकलकामदुघास्ततः किम्' इत्यादौ ततः किमिति न नवीकृतम्। सनियमपरिवृत्तः १२—सनियमत्वेन वक्तुमुचितः अनियमत्वेनोक्तः। यथा—'यत्रानुल्लिखितार्थमेवे'त्यादौ छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति वाच्यम्। अनियमपरिवृत्तः १३—अनियमत्वेन वक्तुमुचितो नियमत्वेनोक्तः यथा—'वक्त्राम्भोजमि'त्यादौ 'शोण एव' इति नियमो न वाच्यः। विशेषपरिवृत्तः १४—विशेषेण वक्तुमुचितोऽपि सामान्येनोक्तः यथा—'श्यामां श्यामलिमानमानयते'त्यादौ 'ज्योत्स्नाम्' इति श्यामाविशेषो वाच्यः। अविशेषपरिवृत्तः १५—सामान्येन वक्तुमुचितोऽपि विशेषेणोक्तः। यथा—'कल्लोलवेल्लितदृषदि'त्यादौ 'एकेन किं न विहितो भवतः स्नाम' इति सामान्यं वाच्यम्। साकाङ्क्षः १६—'अर्थित्वे प्रकटीकृतेऽपी'त्यादौ 'रत्नम् 'उपेक्षितुम्' इत्याकाङ्क्षति। अपदयुक्तः १७—अपदे स्थाने युक्तः संबद्धः। यथा 'आज्ञा शक्रशिखामणिप्रणयिनी'त्यादौ 'स्याच्चेदेष न रावण' इत्यत एव समाप्यम्। सहचरभिन्नः १८—सहचरेभ्यः सहोच्चरितेभ्यो भिन्नः विजातीयः यथा—'श्रुतेन बुद्धिरि'त्यादौ श्रुतादय उत्कृष्टा व्यसनमूर्खते च निकृष्टे। प्रकाशितविरुद्धः १९—प्रकाशितः विवक्षितार्थाद् विरुद्धोऽर्थो येन। यथा—'लग्नं रागावृताङ्ग्ये'त्यादौ 'विदितं तेऽस्त्वि'त्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते। विध्ययुक्तः २०—यत्र विधानं युक्तं न भवेत। यथा—'प्रयत्नपरिबोधितः' इत्यादौ शायितः प्रयत्नेन बोध्यसे इति विधेयम्। अनुवादायुक्तः २१—यत्रानुवादो युक्तो न भवेत्। यथा—'अरे रामाहस्ताभरण' इत्यादौ 'विरहिप्राणदमन' इति नानुवाद्यम्। त्यक्तपुनः स्वीकृतः २२—'लग्नं रागावृताङ्ग्या' इत्यादौ 'विदितं तेऽस्त्वि'त्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः। अश्लीलः २३—यथा 'हन्तुमेव प्रवृत्तस्ये'त्यादौ पुरुषलिङ्गस्यापि प्रतीतिः।

**प्र० ५—सोदाहरणा रसदोषा लेख्याः।**

उ० ५—रसदोषास्त्रयोदश सन्ति। व्यभिचारिणो, रसस्य स्थायिभावस्य च स्वशब्देनोक्तौ क्रमेण त्रयो दोषाः। 'सव्रीडा दयितानने' 'तामनङ्गजयमङ्गल-

श्रियम्' 'संप्रहारे प्रहरणैः' इत्यादीनि क्रमेणोदाहरणानि ज्ञेयानि। अनुभावस्य कष्टकल्पनया व्यक्तिः। ३—यथा—'कर्पूरधूलिधवले'त्यादौ उद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति कष्टकल्पना। विभावस्य कष्टकल्पनया व्यक्तिः ५—यथा 'परिहरति रतिमि'त्यादौ रतिपरिहारादीनामनुभावानां करुणादावपि संभवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः। प्रतिकूलविभावादिग्रहः ६—'प्रसादे वर्तस्वे'त्यादौ शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः। दीप्तिः पुनः पुनः ७—यथा कुमारसम्भवे रतिविलापे। अकाण्डे प्रथनम् ८—अकाण्डे अनवसरे रसस्य प्रथनं विस्तारः। यथा—वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्। अकाण्डे छेदः ९—यथा—वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे, 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ। अङ्गस्याप्यतिविस्तृतिः १०—यथा हयग्रीववधे हयग्रीवस्य। अङ्गिनोऽननुसंधानम् ११—यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकायां विस्मृतिः। प्रकृतिविपर्ययः १२—दिव्यादिव्यभेदात् प्रकृतयस्त्रिविधाः सन्ति, तद्विपरीतवर्णनम्। यथा कुमारसम्भवे शम्भोः शृङ्गारवर्णनम्। अनङ्गस्य रसानुपकारकस्य वर्णनम् १३—यथा कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य राज्ञा प्रशंसनम्।

**प्र० ६—के दोषाः कुत्रादोषाः कुत्र गुणाः कुत्र च दोषगुणरहिताः? इति सोदाहरणं लिखत।**

उ० ६—प्रसिद्धेऽर्थे निर्हेतुरदुष्टः। यथा—'चन्द्रं गते'त्यादौ। अनुकरणे सर्वे दोषा अदोषाः। यथा—'मृगचक्षुषमि'त्यादौ अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ। यथा—'येन ध्वस्तमनोभवे'त्यादौ। वक्त्राद्यौचित्यात् क्वचिद् दोषोऽपि गुणो भवति क्वचिन्न दोषो नापि गुणः। यथा—वैयाकरणादौ वक्तरि प्रतिपाद्ये च रौद्रादौ रसे व्यङ्ग्ये कष्टत्वं गुणः। 'दीधीङ्वेवीङ्सम' इत्याद्युदाहरणम्। नीरसे न गुणो नापि दोषः। यथा—'शीर्णघ्राणाङ्घ्रिपाणीन्' इत्यादौ। अश्लीलं सुरतारम्भगोष्ठ्यां शमकथासु गुणः। यथा—'करिहस्तेने'त्यादि, उत्तानोच्छूनमण्डूके'त्यादि च। सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः। यथा—'पृथुकार्तस्वरपात्रमि'त्यादौ। प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे

स्वयं परामर्शे वाऽप्रतीतं गुणः। यथा—'आत्मारामा' 'षड्धिकदशने'त्यादि।
अधमप्रकृत्युक्तिषु ग्राम्यो गुणः। यथा—'पुष्पोत्करं कलमभक्तनिभमि'त्यादि।
न्यूनपदं क्वचिद्गुणः क्वचिन्न गुणो नापि दोषः। 'गाढालिङ्गने'त्यादि, 'तिष्ठेत्
कोपवशादि'त्यादि च क्रमेणोदाहरणम् अधिकपदं क्वचिद् गुणः। यथा—'वद
वद जितः' इत्यादौ कथितपदं लाटानुप्रासे अर्थान्तरसङ्क्रमितवाच्ये विहितस्यानु-
वाद्यत्वे च। 'सितकरेरुचिरविभा'। 'तदा जायन्ते गुणाः' 'जितेन्द्रियत्वं विनयस्य
कारणम्' इत्यादीनि क्रमेणोदाहरणानि। पतत्प्रकर्षं क्वचिद् गुणः, यथा—
'प्रागप्राप्ते'त्यादौ। समाप्तपुनरात्त न क्वचिद्दोषो; नापि गुणः। तत्र न विशेषण-
मात्रदानार्थं पुनर्ग्रहणमपि तु वाक्यान्तरमेव क्रियते। यथा—'प्रागप्राप्ते'त्यादौ।
अपदस्थसमासं क्वचिद् गुणः। यथा—'रक्ताशोके'त्यादौ। गर्भितमपि क्वचिद्
गुणः। यथा—'भवाम्यपहस्तितरेखः' इत्यादि। क्वचिद् सञ्चारिणः स्वपदोक्तावपि
न दोषः। यथा—'औत्सुक्येन कृतत्वरा' इत्यादि प्रकृतरसपरिपोषकृतो विरुद्धस्य
सञ्चार्यादेर्वाध्यत्वेनोक्तिर्गुणावहा भवति। यथा—'क्वाकार्यं शशलक्ष्मणः' इत्यादौ।

**प्र० ७—रसयोर्विरोधपरिहारः कथं भवति ?**

उ० ७—रसयोर्विरोधो द्विविधोऽस्ति दैशिकः कालिकश्च। ययोर्दैशिको विरो-
धोऽस्ति तयोरेको भिन्नसंश्रयः कार्यः। ययोः कालिको विरोधोऽस्ति तयोर्मध्ये
भिन्नो रसो निवेशनीयः। यथा वीरभयानकयोर्दैशिकविरोधोऽस्ति तस्माद्
भयानकः शत्रुगतत्वेन वर्णनीयः। शान्तशृङ्गारयोः कालिकविरोधोऽस्ति तत्रान्यो
रसो मध्ये निवेश्यः। यथा नागानन्दनाटके शान्तस्य जीमूतवाहनस्य 'अहो गीतम्'
'अहो वादित्रम्' इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः। किञ्च—
विरुद्धोऽपि कश्चित् रसः प्रधानरसेन सह स्मर्यमाणश्चेत् न दुष्टः। साम्येन विव-
क्षितोऽथवा प्रधानरसोपकारको विरुद्धो न दुष्टः। 'अयं स रसनोत्कर्षी' 'दन्तक्षतानि
करजैश्च'—'क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः' इत्यादीनि क्रमेणोदाहरणानि।

**प्र० ८—'यत्तदोर्नित्यः सम्बन्धः' स्पष्टीक्रियताम्। अथवा 'अपाङ्गसंसर्गि इत्यादिपद्ये योऽसाविति पदद्वयमनुवाद्यमात्रप्रतीति-कृत् कथम् ?**

उ० ८—प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नोपेक्षते।
'कातर्यं केवला नीतिः'—'द्वयं गतं संप्रति'—'उत्कम्पिनी' इत्यादीन्युदाहरणानि।

एवमुत्तरवाक्ये गृहीतो यच्छब्दः पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते। यथा—'साधु चन्द्रमसि पुष्करैः' इत्यादौ पूर्वं पठितस्तु यच्छब्दस्तच्छब्दोपादानं नूनमपेक्षते। क्वचिदनुपादानेऽपि सामर्थ्याद् द्वयमपि प्रतीयते। यथा—'ये नाम केचिदिह' इत्यत्र न उत्पत्स्यते तम्प्रतीति गम्यते। एवञ्च 'अपांगसंसर्गी' इत्यादिपद्ये यच्छब्दस्तच्छब्दानुपादानात् साकाङ्क्षः। न चादश्शब्दोऽपि तच्छब्दार्थं प्रतिपादयतीति वाच्यम् 'असौ मरुच्चुम्बित' इत्यादौ तच्छब्दार्थप्रतीत्यभावात् इतरथा 'करवालकराले'त्यादौ 'स' इत्यस्यानर्थक्यं स्यात्। ननु 'योऽविकल्पमिदमर्थमण्डलम्' इत्यत्र यथा इदंशब्दस्तच्छब्दार्थमाह तथाऽदश्शब्दोऽपि कथयितुमर्हतीति चेन्नात्रैव वाक्यान्तरेऽदसो ग्रहणं कार्यं न तु तत्रैव। यच्छब्दस्य समीपे स्थितस्तु प्रसिद्धिं परामृशति। यथा—'तत्तदूर्जितमत्युग्रमि'त्यादिपद्ये। न च 'कल्याणानां त्वमसी'त्यादिपद्येऽविमृष्टविधेयांशोऽपरिहार्यो यच्छब्दस्यैकस्य निराकाङ्क्षत्वेऽपि द्वितीयस्य साकाङ्क्षत्वादिति वाच्यम्, यद्यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तं तथाभूतमेव तच्छब्देन परामृश्यते।

**प्र० ९—अत्राकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादिवाक्यार्थस्य कर्मत्वे कोदण्डः शरा इति प्राप्तम्। न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि। न च केन केनेत्यादिप्रश्नः। उपरितनं सन्दर्भं स्पष्टयत।**

उ० ९—अत्रामवन्मतयोगोदाहरणे सङ्ग्रामांगणमागतेनेत्यादिपद्ये यदि कोदण्डादय आकर्णनक्रियायाः कर्मणि तदा कोदण्डं शरानिति द्वितीया प्राप्नोति 'कर्मणि द्वितीया' इत्यनुशासनात्। यदि कोदण्डादीनां वाक्यार्थविषयाऽन्वयस्तर्हि 'यो यो वीरः समायातः' इत्यादिवत् 'कोदण्डः शरा' इति प्रथमा स्यात् कर्मत्वाद्यभावात् प्रातिपदिकार्थमात्रे प्रथमाविधानाच्च। ननु यच्छब्देन कोदण्डादिरेव प्रतीयते ततश्च यथा यच्छब्दात् तृतीया तथैव कोदण्डादितस्तृतीया युक्तैवेति चेन्न तथा सति कोदण्डादीनां पुनरुपादानं घटो घट इतिवत् व्यर्थं स्यात्। न च कोदण्डादेर्यच्छब्दार्थो विशेषणमथवा यच्छब्दार्थस्य कोदण्डादिर्विशेषणमिति वाच्यम्, आद्ये येन कोदण्डेन यत् शराः समासादितं तत् आकर्णयेति वाक्यार्थपर्यवसानेन 'केन कोदण्डेन के शराः' इति विशेषाकाङ्क्षाया अनिवृत्तिप्रसंगः। कोदण्डेन येन यत् शराः समासादितं तदाकर्णयेति द्वितीयकल्पेऽपि

पूर्वोक्त एव दोषः । ननु येन यदिति सामान्यतो बोधे केन केन किमिति विशेष-प्रश्ने सति तच्छान्त्यर्थं कोदण्डेन शरा इत्याद्युक्तमिति चेन्न केन केनेति प्रश्नाभावात् ।

**प्र० १०—'नैकं पदं द्विः प्रयोज्यं प्रायेण' इत्यस्य क आशयः ।**

उ० १०—ननु भग्नप्रक्रमे तस्यैव शब्दस्य प्रयोगः कर्तव्य इति यदुक्तं तद् वदतो व्याघातं नातिशेते तादृशस्थले कथितपदांगीकारात्, इति चेन्नोद्देश्यः प्रतिनिर्देश्यभिन्नस्थल एवैकपदप्रयोगनिषेधस्यांगीकारात् । तद्विषये तस्यैव शब्दस्य सर्वनाम्नो वा प्रयोगं विना दोषांगीकारात् । यथा—'उदेति सविते'-त्यादिपद्ये उद्देश्यप्रतिनिर्देश्यभावसत्वात् तच्छब्दस्यैव पुनरुपादानम् । रक्तादि-पदग्रहणे तु अर्थान्तरतयेव प्रतिभासमानः प्रतीति स्थगयेदिति ।

इति सप्तमोल्लासः ।



# अथ अष्टमोल्लासः

**प्र० १—गुणालङ्कारयोरन्यमतनिराकरणसहितं सलक्षणमन्तरं प्रतिपादयत ।**

उ० १—ये प्रधानस्य रसस्य धर्माः सन्ति, यथाऽऽत्मनः शौर्यादयो धर्माः सन्ति, ये च रसोत्कर्षस्य हेतुभूताः, ये च रसं विना नावतिष्ठन्ते ते गुणा इत्युच्यन्ते । शौर्यादयो धर्मा आत्मन एव नतु शरीरस्यैवमेव माधुर्यादयो रसस्यैव धर्माः न तु वर्णानाम् । ये शब्दार्थद्वारेण सम्भविनं रसं कदाचिदुपकुर्वन्ति न तु सर्वदा । यथा हारादयः कण्ठाद्यङ्गानामतिशयाधानद्वारेण आत्मनोऽप्युपकारका-स्तथैव शब्दार्थद्वारेण ये कदाचित् सम्भविनं रसमुपकुर्वन्ति तेऽनुप्रासोपमादयोऽ-लङ्कार इति नाम्ना व्यवह्रियन्ते । गुणा रसं विना नावतिष्ठन्तेऽलङ्कारा अव-तिष्ठन्ते । गुणाः सर्वदा रसोपकारका अलङ्काराः कदाचिदेवेति गुणालङ्कारभेदः । ननु गुणालङ्कारयोर्गड्डलिकाप्रवाहेणैव भेदः । समवायवृत्त्या अपृथक्स्थित्या-त्मकसम्बन्धेन शौर्यादयः, संयोगेन हारादय इति गुणालङ्कारभेदस्य ओजःप्रभृती-नामनुप्रासोपमादीनाञ्चोभयेषामपि समवायवृत्तिदर्शनेन व्यभिचारादिति चेन्न, गुणालङ्कारयोरुक्तरीत्याऽकाव्यभेदसत्त्वात् । न च 'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः' इति गुणालङ्कारयोर्लक्षणं स्यादिति वाच्यम्, समस्तैर्गुणैः काव्यव्यवहार आहोस्वित् कतिपयैः । आद्येऽसमस्तगुणा गौडी पाञ्चाली च रीतिः कथं काव्यस्यात्मा, वामनमते—'रीतिरात्मा काव्यस्य' इति काव्यलक्षणात् । अन्त्ये—'अद्रावत्रे'त्यादिपद्येऽलङ्काराभावेऽपि ओजःप्रभृति-गुणानां सत्त्वात् काव्यव्यवहारप्राप्तिः । अलङ्कारलक्षणमपि वामनोक्तं न युक्तं 'स्वर्गप्राप्तिरनेनैव' इत्यत्र गुणाभावाद् गुणकृतशोभातिशयहेतुत्वाभावादल-ङ्कारस्य । गुणनिरपेक्षौ विशेषोक्तिव्यतिरेकावेव 'स्वर्गप्राप्ति'रित्यादिपद्ये काव्यव्यवहारस्य प्रवर्तकौ ।

**प्र० २—गुणाः कति सन्ति ? कस्मिन् कस्मिन् रसे तेषां स्थितिः ? किञ्च तेषां लक्षणम् ?**

उ० २—गुणास्त्रयः सन्ति माधुर्यौजःप्रसादाख्याः । 'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्' अर्थात् द्रुतिकारणम् आह्लादकत्वं नाम आनन्दस्वरूपत्वं

माधुर्यमुच्यते । अयं गुणः सम्भोगशृङ्गारे, करुणे, विप्रलम्भे, शान्ते च क्रमेणातिशयाधायको भवति । 'दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति' दीप्तिरूपा या आत्मनश्चित्तस्य विस्तृतिस्तस्य हेतुः । अयमपि वीरे, बीभत्से, रौद्रे क्रमेणाधिकः ।

शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ।

व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ॥' इति प्रसादलक्षणम् ।

**प्र० ३—प्राचीनोक्तानां दशशब्दगुणानां दशार्थगुणानाञ्च कथं त्रिषु गुणेष्वन्तर्भावः ?**

उ० ३—बहूनां पदानामेकपदवद्भासनरूपो यः श्लेषः, यश्च गाढताशिथिलताक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता, यश्चौजोमिश्रितशैथिल्यरूपः प्रसादः, तेषामोजस्यन्तर्भावः । पृथक्पदत्वरूपं माधुर्यं प्रकारान्तरेण साक्षादुपात्तम् । प्रसादेनार्थव्यक्तिश्चरितार्था । यथा रीत्याऽऽरब्धं तथैव समापनमिति मार्गाभेदरूपा समता क्वचिद्दोषः । यथा—'मातङ्गाः किमु वल्गितैः' इत्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः कष्टत्वग्राम्यत्वयोर्दोषेषु गणनादपारुष्यरूपं सौकुमार्यमौज्ज्वल्यरूपा कान्तिश्च स्वीकृता । इत्थं दशशब्दगुणानामन्तर्भावो भवति । पञ्चविधा प्रौढिरस्ति । १—यथा पदार्थे वाक्यरचनम् चन्द्र इति वक्तव्ये 'अत्रिलोचनसंभूतं ज्योतिः' । वाक्यार्थे पदस्याभिधानम् । २—पूर्वस्य वैपरीत्यमुदाहरणम् । ३—एकवाक्यार्थस्यानेकवाक्येन प्रतिपादनम् । ४—अनेकवाक्यार्थस्यैकवाक्येन प्रतिपादनम् । ५—विशेषणस्य सार्थकत्वम् । इयं प्रौढिर्यदोज इत्युक्तं तद् वैचित्र्यमात्रं न तु गुणः । तदभावेऽपि काव्यव्यवहारप्रवृत्तः । अपुष्टार्थनिराकरणेन साभिप्रायत्वरूपमोजः, अधिकपदत्वनिराकरणेनार्थवैमल्यात्मा प्रसादः, अनवीकृतनिराकरणेन उक्तिवैचित्र्यरूपं माधुर्यम्, अमङ्गलरूपाश्लीलनिराकरणेन अपारुष्यरूपं सौकुमार्यम्, अग्राम्यरूपोदारता च ग्राम्यनिराकरणेन स्वीकृता । स्वभावोक्त्यलङ्कारेण 'अर्थव्यक्तिः', रसध्वनिना रसवदलङ्काररूपगुणीभूतव्यङ्ग्येन च दीप्तरसरूपा कान्तिः, क्रमस्य योऽतिक्रमस्तस्य याऽस्फुटता तत्र या युक्तिस्तत्सम्बन्धरचनारूपः श्लेषोऽपि विचित्रत्वमात्रम् । अवैषम्यरूपा समता दोषाभावो न तु गुणः । अर्थदर्शनरूपो यः समाधिः स न गुणो यतो ह्यन्येनावर्णितस्य वाऽर्थस्यानुसन्धानं विना काव्यनिर्माणं न भवितुमर्हति । काव्यशरीरकारणं गुणो न भवितुमर्हति तस्मादर्थगुणा अपि पृथक् न वक्तव्याः ।

**प्र० ४—कस्य गुणस्य के वर्णा व्यञ्जका इति सोदाहरणं प्रतिपाद्यत ।**

उ० ४—टठडढवर्जिताः कादयो मान्ता निजवर्गान्त्ययुक्ताः शिरसि, तथा ह्रस्वस्वरयुतौ रेफणकारौ अल्पसमासो मध्यमसमासो वा तथा च माधुर्यवती रचना माधुर्यस्य व्यञ्जिका भवति यथा—'अनङ्गरङ्गप्रतिममि'त्यादि । आद्य-तृतीयाभ्यां सह द्वितीयचतुर्थयोः सम्बन्धः । तथा रेफस्याध उपरि उभयत्र वा सम्बन्धः समानाकारयोः कयोश्चित् संयोगः । टठडढाः शकारः षकारो दीर्घ-समासो विकटरचना च ओजोनामकस्य गुणस्य व्यञ्जिका भवति, यथा—'मूर्ध्ना-मुद्वृत्तकृत्ते'त्यादि । येन शब्देन समासेन रचनया वा श्रवणमात्रेणार्थज्ञानं भवेत् स प्रसादव्यञ्जकः, यथा—'परिम्लानं पीनस्तनजघने'त्यादि ।

**प्र० ५—रचनावृत्तिवर्णानामन्यथात्वं कथं भवतीति सोदाहरणं प्रतिपाद्यत ।**

उ० ५—यद्यपि रचनादयो गुणाधीनास्तथापि वक्त्रौचित्यात् वाच्यौचि-त्यात् प्रबन्धौचित्याच्च क्वचिद् रचनादीनामन्यथात्वमपि भवति । यथा—'मन्थायस्तार्णवाम्भः' इत्यादि 'प्रौढच्छेदानुरूपोच्छलन' इत्यादि च । आद्ये भीमसेनो वक्ता द्वितीये तु वाच्यं कुम्भकर्णोत्तमाङ्गं तदपेक्षया रचना । एवं प्रबन्धापेक्षयाऽऽख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः कथायां रौद्रेऽपि नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न दीर्घसमासादयः ।

इत्यष्टमोल्लासः ।



# अथ नवमोल्लासः

प्र० १—वृत्तयः कति भवन्ति, किञ्च तासां लक्षणं, विज्ञोदाहरणम् ?

उ० १—रसविषयव्यापारवती वर्णरचना वृत्तिः। तिस्रो वृत्तयः सन्ति उपनागरिका परुषा कोमला च। 'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते' 'ओजः-प्रकाशकैस्तु 'परुषा' 'कोमला' परैः' इति क्रमेण लक्षणानि। माधुर्यौजोगुणयोर्ये उदाहरणे ते आद्ययोरुदाहरणे। कोमलायास्तु—'अपसारय घनसारमि' त्यादिकम्। एता एव वैदर्भी गौडी पाञ्चालीति नाम्ना क्रमेण व्यपदिश्यन्ते। कोमला तु ग्राम्येत्यपि भण्यते वृत्तिरेव रीतिरिति कथ्यते।

प्र० २—सलक्षणान् सभेदान् सोदाहरणान् शब्दालङ्कारान् प्रतिपादयत।

उ० २—अस्योत्तरं निम्नप्रकोष्ठे द्रष्टव्यम्।

| अलङ्काराः | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| वक्रोक्तिः | यदुक्तमन्यथा | १ श्लेषेण<br>२ काक्वा | नारीणामनुकूलमाचरसि गुरुजनपरतंत्र० |
| अनुप्रासः | वर्णसाम्यमनुप्रासः | छेकानुप्रासः<br>वृत्त्यनुप्रासः<br>लाटानुप्रासः | |
| छेकानुप्रासः | सोऽनेकस्य सकृत्पूर्वः | | ततोऽरुणपरिस्पन्देति |
| वृत्त्यनुप्रासः | एकस्याप्यसकृत् परः | | |
| लाटानुप्रासः | शाब्दस्तु | १ पदानाम् | यस्य न सविधे० |

| अलङ्काराः | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| | | २ पदस्य | वदनं वरवर्णिन्याः० |
| | | ३ एकसमासे | सितकरकरेति० |
| | | ४ भिन्नसमासे | |
| | | ५ समासासमासयोः | |
| यमकम् | अर्थे सत्यर्थ-भिन्नानां वर्णानां स पुनः श्रुतिः | ( प्रातिपदिकस्य ) इदं पादजं नवभेदम् ,द्विधा विभक्ते पादे विंशतिभेदम्, त्रिखण्डे त्रिंशत्, चतुःखण्डे चत्वारिंशत्, | |
| | | प्रथमपादस्य तृतीयपादय-मने प्रथमस्य द्वितीये तृतीयस्य चतुर्थे- | सन्नारीभरणोपायम् विनायमेनौ नयताऽ-सुखादिना० |
| | | श्लोकाभ्यासे | ससारस्मरतौ० |
| | | द्वितीयपादान्तभागस्य | अनन्तमहिमव्यासः |
| | | चतुर्थपादान्तभागयमने- | |
| | | आदिभागस्यान्तभागयमने- | यदानतोऽयदानतः । |
| | | आद्यन्तिक पूर्वार्धे-उत्तरार्धे | सरस्वती प्रसादं मे० |
| | | आद्यन्तिकमन्तादिकं चेति | |
| | | द्वयोरप्यर्धयोराद्यन्ति सान्तादिके च० | ससारसाकमित्यादि० |
| श्लेषः | वाच्य भेदेन भिन्ना यत् | अनियतस्थाने वृत्ति० | मधुपराजीत्यादि० |
| | | वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनभेदात् | |
| | | प्रकृत्याद्यष्टभेदाभावाच्च नवविधः । | |
| | | १ वर्णे | अलङ्कारः शङ्काकरेति० |

| अलङ्काराः | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| | | २ पदे | पृथुकार्तस्वरपात्रम् |
| | | ३ लिङ्गे | भक्तिप्रह्वेति० |
| | | ४ भाषायाम् | महदे सुरसंधम्मे० |
| | | ५ प्रकृतौ | अयं सर्वाणि० |
| | | ६ प्रत्यये | रजनिरमणमौलेः० |
| | | ७ विभक्तौ | सर्वस्वं हरेति– |
| | | ८ वचने | भक्तिप्रह्वेति– |
| | | ९ प्रकृत्यादिभेदाभावे | योऽसकृत् परमगोत्राणाम्- |
| चित्रम् | तच्चित्रं यत्र वर्णानामिति | खड्गे | मारारिशक्रेति– |
| | | मुरजे | सरला बहलारम्भेति– |
| | | पद्मे | भासते प्रतिभासारेति– |
| | | सर्वतोभद्रे | रसासाररसेति– |
| पुनरुक्तवदाभासः | पुनरुक्तवदाभासो विभिन्नाकारशब्दगा। एकार्थतेव | सभङ्गशब्दनिष्ठः | अरिवधदेहशरीरः |
| | | अभङ्गशब्दनिष्ठः | चकासत्यङ्गनारामाः– |
| | | शब्दार्थनिष्ठः | तनुवपुरजघन्योऽसौ– |

प्र०—'अर्थभेदेन शब्दभेदः'–'काव्यमार्गे स्वरो न गण्यते' अनयोः क आशयः।

उ०—'अयं भावः–' 'सकृदुच्चारितः शब्दः सकृदेवार्थं गमयति' इति नये एकशब्देनैकस्यैवार्थस्य प्रतीतिरर्थद्वयप्रतीत्यर्थं श्लेषस्थले एकाकारौ द्वौ शब्दौ स्त इत्यवश्यमङ्गीकार्यम्। तौ चैकेन प्रयत्नेनैकदोच्चार्यतया पृथक्तया नानुभूयेते। ननु

भिन्नसमासानामिन्द्रशत्रुप्रभृतीनां श्लेषे उदात्तानुदात्तादिस्वरभेदादेकरूपत्वप्रतिभासनमनुपपन्नमिति चेन्न, 'काव्यमार्गे स्वरो न गण्यते' इत्यङ्गीकारात्। अतएव 'विभाषा छन्दसि' (१।२।३६) इति पाणिनीयसूत्रे तन्त्रेण आवृत्त्या 'वाऽच्छन्दसीति' नञं प्रश्लिष्य भाषायामपि वैकल्पिकी एकश्रुतिरङ्गीक्रियते।

**प्र० ४—अभङ्गश्लेषः शब्दालङ्कारोऽर्थालङ्कारो वा ? श्लेष उपमाद्यलङ्कारबाधको न वा ? शब्दरूपोऽर्थरूपश्च श्लेषोऽर्थालङ्कारोऽस्ति न वा ?**

उ० ४—ननु अभङ्गश्लेषः स्वरितादिगुणभेदाभावादेकप्रयत्नोच्चार्यत्वादर्थचमत्कृतिमत्वाच्चार्थश्लेषः कथं नाभ्युपगम्यते इति चेन्न, दोषगुणालङ्कारविभागस्यान्वयव्यतिरेकानुविधायित्वात्। शब्दपरिवृत्तिसहे 'स्तोकेनोन्नतिमायाति' इत्यादावेवार्थश्लेषस्य सत्त्वात्। न चोपमादीनां श्लेषासंकीर्णतया श्लेषस्य चालङ्कारान्तरसंकीर्णतयोपमाद्यलङ्कारबाधकः श्लेष इति वाच्यम्, गुणक्रियासाम्यवच्छब्दसाम्यस्याप्युपमाप्रयोजकत्वात्, 'स्फुटमर्थालङ्कारावेतौ' इति रुद्रटोक्तत्वाच्च। ननु 'कमलमिव मुखम्' इत्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इति चेन्न, पूर्णोपमाया निर्विषयत्वात्। 'देव त्वमेव पातालम्' इत्यादिः श्लेषस्य चोपमाद्यलङ्कारभिन्नो विषयोऽस्ति। द्वयोर्योगे संकरः। वस्तुत उपमाव्यपदेश एव बलीयान् 'प्राधान्येन व्यपदेशा भवन्तीति' नियमात्। श्लेषं विना साधारणधर्मसम्भवो नास्ति। साधारणधर्मं विना च नोपमा भवितुमर्हति 'साधर्म्यमुपमाभेदे' इति तल्लक्षणात्। 'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका' इत्यादौ विरोधज्ञानोत्पत्तिहेतुको विरोधोऽस्ति। न ह्यत्रार्थद्वयप्रतिपादकः श्लेषो द्वितीयार्थस्य प्रतिभातमात्रस्य शाब्दबोधाविषयत्वात्। ननूभयविधश्लेषस्यार्थालङ्कारत्वं स्यादिति चेन्न वदतो व्याघातात्। शब्दश्लेषः कथ्यतेऽर्थालङ्कारमध्ये गण्यते। किञ्च चमत्कारजनकता यत्र भवेत्तस्यैवालङ्कारता युक्ता, शब्दस्य चमत्कारित्वे शब्दालङ्कारतैवोचिता। अर्थसापेक्षत्वादत्र शब्दानामार्थश्लेष इति चेदनुप्रासा-

दीनामप्यर्थालङ्कारतापत्तेः। रसाद्यनुगतः प्रकृष्टो न्यास इति व्युत्पत्त्यनुसारमनुप्रासो रसव्यञ्जकं स्वरूपमपेक्षते रसश्चार्थं विना न भवतीति तात्पर्यम्। शब्दगुणदोषालङ्काराणामर्थापेक्षयाऽर्थगुणदोषालङ्काराणां शब्दापेक्षया व्यवस्थितिरिति तेऽपि क्रमेणार्थगतत्वेन च भण्येरन्। अन्यच्च—'विधौ वक्रे मूर्ध्नि' इत्यादौ वर्णादिश्लेषे एकप्रयत्नोच्चार्यत्वाच्छब्दभेदेऽप्यर्थश्लेषत्वं प्रसज्येत तस्मादभङ्गश्लेषोऽर्थालङ्कार एवालङ्कारान्तरस्य चाबाधक एवेति स्थितम्।

इति नवमोल्लासः।



# अथ दशम उल्लासः

प्र० १–सलक्षणान् सभेदान् सोदाहरणान् अर्थालङ्कारान् प्रतिपादयत ।

उ० १—अस्योत्तरं निम्नप्रकोष्ठे द्रष्टव्यम् ।

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| १. उपमा | साधर्म्यमुपमा भेदे– | वाक्यगतश्रौती- | स्वप्नेऽपि समरेषु० |
| | | वाक्यगतार्थी- | चकितहरिणलोल० |
| | | समासगतश्रौती- | अत्यायतैर्नियमकारिभि० |
| | | समासगतार्थी- | अवितथमनोरथपथ० |
| | | तद्धितगतश्रौती- | गाम्भीर्यगरिमा० |
| | | तद्धितगतार्थी- | दुरालोकः स समरे० |
| | | वाक्यगतधर्मलुप्ता श्रौती- | धन्यस्यानन्यसामान्य० |
| | | वाक्यगतार्थी धर्म० | आकृष्टकरवालोऽसौ० |
| | | | करवाल इवाचारः० |
| | | समासगतश्रौती धर्म० | तस्य वागमृतोपमा० |
| | | समासगतार्थी धर्म० | विषकल्पम्० |
| | | तद्धितगतार्थी धर्म० | सकलकरणपरविश्रामेति० |
| | | वाक्यगतोपमानलुप्ता- ( आर्थी ) | कःवलमसितिपाठे सरिसिमित्यत्र णूणमिति पाठे च समासगा० |
| | | उपमाप्रतिपादकलोपे ( द्विपदसमासगा )- | |
| | | बहुपदसमासगा उपमा- | ततः कुमुदनाथेन० |
| | | कर्माधिकरणयोः क्यचि- | असितभुजग० |
| | | क्यङि– | पौरं सुतीयति- |
| | | चोपमाप्रतिपादकलोपे– | जनं समरान्तरे० |
| | | कर्मणि कर्तरि च | मृधे निदाघघर्मांशु०- |
| | | णमुल्युपमाप्रतिपादकलोपे- | दर्शम्० |
| | | धर्मवाद्योर्लोपे क्विप्-गता | सविता विधवति० |
| | | समासगता च | परिपन्थिमानो |
| | | धर्मोपमानयोर्लोपे-समासगा | दुन्दुभ्यमानः० |

| लङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| | | वाक्यगा च— | कुसुमेण समसिति पाठे॰<br>वाक्यगा॰ |
| २. अनन्वयः | उपमानोपमे-<br>यत्वे एकस्यै-<br>वैकवाक्यगे, | वाद्युपमेयलोपे क्यचि—<br>उपमेयातिरिक्तत्रितयलोपे | अरातिविक्रम॰<br>तरुणिमनि कृतावलोकना<br>न केवलं भाति॰ |
| ३. उपमे-<br>योपमा | विपर्यास<br>उपमेयोपमा-<br>तयोः | | कमलेव मतिर्मति-<br>रिव कमला॰ |
| ४, उत्प्रेक्षा | संभावनम-<br>थोत्प्रेक्षा | | उन्मेषं यो मम न सहते॰ |
| ५. सन्देहः | सन्देहस्तु<br>भेदोक्तौ— | १ भेदोक्तौ निश्चयगर्भः-<br>२ भेदोक्तौ निश्चयान्तः—<br>२ भेदानुक्तौ— | अयं मार्तण्डः किं स खलु<br>इन्दुः किं क्व कलङ्कः॰<br>अस्याः सर्गविधौ प्रजा-<br>पतिरभूत्॰ |
| ६. रूपकम् | तद्रूपकमभेदो<br>य उपमानो-<br>पमेययोः | १ समस्तवस्तुविषयरूपकम् | ज्योत्स्ना भस्मच्छुरण-<br>धवला॰ |
| कदेशविवर्ति | श्रौता आर्था<br>श्च ते— | २ एकादेशविवर्तिरूपकम्-<br>३ निरङ्गरूपम्<br>४ निरङ्गमालारूपकम्-<br>५ श्लिष्टमालापरम्परित-<br>रूपकम्— | यस्य रणान्तःपुरे करे॰<br>कुरङ्गीवाङ्गानि॰<br>सौन्दर्यस्य तरङ्गिणी॰<br>विद्वन्मानसहंस॰<br>आलानं जयकुञ्जरस्य॰ |
| परम्परित-<br>रूपकम् | नियतारोप-<br>णोपायः | ६ अश्लिष्टमालापरम्परित-<br>रूपकम्<br>७ श्लिष्टकेवलपरम्परित-<br>रूपकम्-<br>८ अश्लिष्टकेवलरूपकम्<br>९ रशनारूपकम्— | अलौकिकमहालोक॰<br>निरवधि च निराश्रयं च॰<br>किसलयकरैर्लतानाम्<br>अवाप्तप्रागल्भ्यम्॰ |
| ७. अपह्नुतिः | प्रकृतं यन्निषि<br>ध्यान्यत्॰ | | |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| ८. श्लेषः | श्लेषः सवाक्ये एकस्मिन्- | | उदयमयत दिङ्मालिन्यम्० |
| ९. समासोक्तिः | परोक्तिर्भेदकैः श्लिष्टैः० | | लब्ध्वा तव बाहुस्पर्शम्०<br>क्व सूर्यप्रभवो वंशः०<br>दोर्भ्यां तितीर्षति० |
| १०. निदर्शना | अभवन् वस्तुसम्बन्धः— | मालारूपा निदर्शना— | उन्नतं पदमवाप्य यो लघुः |
| निदर्शना (अपरा) | स्वस्वहेत्वन्वयस्योक्तिः- | १ कार्ये प्रस्तुते कारणस्य वर्णनम्— | याताः किं न मिलन्ति० |
| ११. अप्रस्तुतप्रशंसा | अप्रस्तुतप्रशंसा या सा | २ कारणे प्रस्तुते कार्यस्य वर्णनम्— | राजन् राजसुता न पाठयति<br>एतत्तस्य मुखात् कियम्० |
| | | ३ सामान्ये प्रस्तुते विशेषस्य च | |
| | | ४ विशेषे प्रस्तुते सामान्ये च | सुहृद्वधूबाष्पजलप्रमार्जनं० |
| | | ५ श्लेषहेतुकाप्रस्तुतप्रशंसा- | पुंस्त्वादपि प्रविचलेद्० |
| | | समासोक्तिहेतुकाप्रस्तुतप्रशंसा— | येनास्यभ्युदितेन० |
| | | सादृश्यमात्रहेतुकाप्रस्तुतप्रशंसा— | आदाय वारि परितः० |
| | | वाच्ये प्रतीयमानार्थानध्यारोपेण- | अब्धेरम्भः० |
| | | अध्यारोपण— | कस्त्वं भोः कथयामि,<br>सोऽपूर्वो रसनाविपर्ययविधिः |
| | | अंशेष्वध्यारोपेण— | |
| १२. अतिशयोक्तिः | निगीर्याध्यवसानं तु प्रकृतस्य | उपमानेन निगीर्णस्योपमेयस्याध्यवसानम्— | कमलमनम्भसि० |
| | | प्रस्तुतस्यान्यत्वम्— | अन्यत् सौकुमार्यम्० |
| | | यद्यर्थोक्तौ कल्पनम— | राकायामकलङ्कम्० |
| | | कारणकार्ययोः पौर्वापर्यविपर्ययः— | हृदयमधिष्ठितादौ० |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| १३. प्रति-वस्तूपमा | प्रतिवस्तूपमा तु सा सामान्यस्य द्विरेकस्य | अमाला प्रतिवस्तूपमा | देवीभावं गमिता० |
| | | माला प्रतिवस्तूपमा | यदि दहत्यनिलोऽत्र० |
| १४. दृष्टान्तः | दृष्टान्तः पुनस्तेषां सर्वेषां प्रतिबिम्ब | साधर्म्येण | त्वयि दृष्ट एव तस्याः० |
| | | | तवाहवे साहसकर्मशर्मणः० |
| | | वैधर्म्येण | |
| १५. दीपकम् | सकृद्वृत्तिस्तु धर्मस्य | क्रियादीपकम् | कृपणानां धनं नागानां फणमणिः० |
| | | कारकदीपकम् | स्विद्यति कूणति० |
| मालादीपकम् | मालादीपकमाद्यं चेद् | मालादीपकम् | सङ्ग्रामाङ्गणमागतेन० |
| १६. तुल्ययोगिता | नियतानां सकृद्धर्मः सा | प्राकरणिकानां सकृद् धर्मः | पाण्डु क्षामं वदनम्० |
| | | अप्राकरणिकानां सकृद् धर्मः | कुमुदकमलनील |
| १७. व्यतिरेकः | उपमानाद् यदन्यस्य | अश्लिष्टे हेत्वोरुक्तौ शाब्दं साम्यम् | असिमात्रसहायस्य। अत्र तुच्छेति महावृत्तेरनयोः |
| | | आर्थं साम्यम् | पर्यायेण युगपद् वाऽनुपादाने भेदत्रयम्। असिमात्रसहायोऽपि० |
| | | अ० हे० आक्षिप्तं साम्यम् | इयं सुनयना० |
| | | श्लिष्टे हेत्वोरुक्तौ शाब्दं साम्यम् | जितेन्द्रियतया सम्यक्० |
| | | श्लि०हे०उ०आर्थे साम्यम् | अखण्डमण्डलः श्रीमान्० |
| | | श्लि० आर्थसाम्ये मालाव्यति० | हरवन्न विषमदृष्टिः० |
| | | श्लि० हे० उ० आक्षिप्तं साम्यम् | नित्यादितप्रतापेन० |
| १८. आक्षेपः | निषेधो वक्तुमिष्टस्य | वक्ष्यमाणविषयः | ए एहि किमपि कस्याः० |
| | | उक्तविषयः | ज्योत्स्ना मौक्तिकदाम० |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| १९. विभावना | क्रियायाः प्रतिषेधेऽपि फलव्यक्तिः | | कुसुमितलताभिरहताऽप्युधत्त० |
| २०. विशेषोक्ति | विशेषोक्तिरखण्डेषु कारणेषु फलावचः | अनुक्तनिमित्ता<br>उक्तनिमित्ता<br>अचिन्त्यनिमित्ता | निद्रानिवृत्तावुदिते०<br>कर्पूर इव दग्धोऽपि०<br>स एकस्त्रीणि जयति० |
| २१. यथासंख्यम् | यथासंख्यं क्रमेणैव क्रमिकाणांसमन्वयः | | एकस्त्रिधा वचसि चेतसि० |
| २२. अर्थान्तरन्यासः | सामान्यं वा विशेषो वा- | विशेषेण सामान्यस्य साधर्म्येण समर्थनम्<br>सा० वि० साधर्म्येण समर्थनम्<br>विशे. सा. वैधर्म्येण समर्थनम्<br>सा० वि० वैधर्म्येण समर्थनम् | निजदोषावृत्तमनसाम्०<br>सुसितवसनालङ्कारायाम्०<br>गुणानामेव दौरात्म्यात्०<br>अहोहि मे बह्वपराद्धमायुषा |
| २३. विरोधाभासः | विरोधः सोऽविरोधेऽपि | १. जातेर्जात्या<br>२. जातेर्गुणेन<br>३. जातेः क्रियया<br>४. जातेर्द्रव्येण<br>५. गुणस्य गुणेन<br>६. गुणस्य क्रियया<br>७. गुणस्य द्रव्येण<br>८. क्रियायाः क्रियया<br>९. क्रियाया द्रव्येण<br>१०. द्रव्यस्य द्रव्येण | अभिनवनलिनी०<br>गिरयोऽप्यनुन्नतियुजः०<br>येषां कण्ठपरिग्रहप्रण०<br>सृजति च जगदिदमवति०<br>सततं मुसलासक्ता०<br>पेशलमपि खलवचनम्०<br>क्रौञ्चाद्रिरुद्दाम०<br>परिच्छेदातीतः०<br>अयं वारामेको निलय०<br>समदमतङ्गजमद० |
| २४. स्वभावोक्ति | स्वभावोक्तिस्तु डिम्भादे | | पश्चादङ्घ्री प्रसार्य० |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| २५. व्याजस्तुतिः | व्याजस्तुतिर्मुखे निन्दा | स्तुतिपर्यवसायिनी निन्दा | हित्वा त्वामुपरोधवन्ध्यमनसाम्० |
| | | निन्दापर्यवसायिनी स्तुतिः | हे हेलाजितबोधिसत्त्व० |
| | | | सहदिवसनिशाभिर्दीर्घाः० |
| २६. सहोक्तिः | सा सहोक्तिः सहार्थस्य | | |
| २७. विनोक्तिः | विनोक्तिःसा विनाऽन्येन | अशोभनः | अरुचिर्निशया विना० |
| | | शोभनः | मृगलोचनया विना० |
| २८. परिवृत्तिः | परिवृत्तिर्विनिमयः | समेन समस्य | लतानामेतासामुदितकुसु० |
| | | उत्तमेन न्यूनस्य च— | लतास्त्वद्धन्याना० |
| | | | नानाविधिप्रहरणैर्नृप० |
| २९. भाविकम् | प्रत्यक्षा इव यद्भावाः० क्रियन्ते | न्यूनेन उत्तमस्य | आसीदञ्जनमत्रेति पश्यामि० |
| ३०. काव्यलिङ्गम् | काव्यलिङ्गं हेतोर्वाक्यपदार्थता | वाक्यार्थता | वपुःप्रादुर्भावादनुमितमिदं जन्मनि० |
| | | अनेकपदार्थता | |
| | | एकपदार्थता | प्रणयिसखीसलील० |
| ३१. पर्यायोक्तम् | पर्यायोक्तं विना वाच्यवाचकत्वेन | | भस्मोद्धूलन भद्रमस्तु० |
| | | | यं प्रेक्ष्य चिररूढाऽपि |
| ३२. उदात्तम् | उदात्तं वस्तुनः सम्पत् | | मुक्ताः केलिविसूत्रहारगलिताः० |
| | महतां चोपलक्षणम् | | तदिदमरण्यं यस्मिन्० |
| ३३. समुच्चयः | तत्सिद्धिहेतावेकस्मिन् | असद्योगः | दुर्वाराः स्मरमार्गणाः |
| | | सद्योगः | कुलममलिनम्० |
| | | सदसद्योगः | शशी दिवसधूसरः० |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| | स त्वन्यो युगपद् वा गुणक्रियाः | गुणयौगपद्यम् | विदलितसकलारिकुलम्० |
| | | क्रियायौगपद्यम् | अयमेकपदे तया० |
| | | गुणक्रियायौगपद्यम् | कलुषं च तवाहितेष्वकस्मात् |
| ३४, पर्यायः | एकं क्रमेणानेकस्मिन् पर्यायः | एकमनेकत्र भवति | नन्वाश्रयस्थितिरियं तत्र० |
| | | एकमनेकत्र क्रियते | तत्तेषां श्रीसहोदररत्नाभरणे |
| | | अनेकमेकत्र भवति | मधुरिमरुचिरं वचः० |
| | | अनेकमेकत्र क्रियते | तद्गेहं नतभित्ति० |
| ३५. अनुमानम् | अनुमानं तदुक्तं यत् | | यत्रैतालहरीचलाचलदृशः० |
| ३६. परिकरः | विशेषणैर्यत् साकूतैरुक्तिः | | महौजसो मानधना० |
| ३७. व्याजोक्तिः | व्याजोक्तिश्छद्मनोद्भिन्न० | | शैलेन्द्रप्रतिपाद्यमानगिरिजा० |
| ३८. परिसंख्या | किञ्चित् पृष्टमपृष्टं वा० | प्रश्नपूर्वकप्रतीयमानव्यव० | किमासेव्यं पुंसाम्० |
| | | प्रश्नपूर्वकवाच्यव्यवच्छेद्या | किं भूषणं सुदृढमत्र यशो न रत्नम्० |
| | | अप्रश्नपूर्वकप्रतीयमानव्यव० | कौटिल्यं कचनिचये० |
| | | अप्रश्नपूर्वकवाच्यव्यवच्छेद्या | भक्तिर्भवे न विभवे० |
| ३९. कारणमाला | यथोत्तरं चेत् पूर्वस्य० | | जितेन्द्रियत्वं विनयस्य कारणम्० |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| ४०. अन्योन्यम् | क्रियया तु परस्परम्० | | हंसानां सरोभिः श्रीः सार्यते |
| ४१. उत्तरम् | उत्तरश्रुतिमात्रतः प्रश्नस्योन्नयनम् | श्रुतिमात्रतः प्रश्नस्योन्नयनम् | वाणिजक हस्तिदन्ताः |
| | | असकृत् प्रश्ने सति असम्भाव्यमुत्तरम् | कुतः० का विषमा दैवगतिः |
| ४२. सूक्ष्मम् | कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थः | | वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैः० |
| ४३. सारः | उत्तरोत्तरमुत्कर्षो भवेत् सारः | | राज्ये सारं वसुधा० |
| ४४. असङ्गतिः | भिन्नदेशतयाऽत्यन्तम् | | यस्यैव व्रणस्तस्यैव वेदना० |
| ४५. समाधिः | समाधिः सुकरं कार्यं कारणान्तर० | | मानमस्या निराकर्तुम्० |
| ४६. समः | सम योग्यतया योगः | सद्योगः | धातुः शिल्पातिशय० |
| | | असद्योगः | चित्रं चित्रं बत० |
| ४७. विषमः | सम योग्यतया योगः | (अतिवैधर्म्यात्) सम्बन्धाघटनम् | शिरीषादपि मृद्वङ्गी० |
| | | क्रियाफलाप्राप्तिरनर्थं च कर्तुः | सिंहिकासुत संत्रस्तः सद्यः करस्पर्शमवाप्य० |
| | | कार्यस्य गुणेन कारणस्य गुणो विरु० | |
| | | कार्यक्रियया कारणक्रियाविरुद्धा | आनन्दममन्दमिमम्० |
| ४८. अधिकम् | महतोर्यन्महीयांसावाश्रिता | आधाराधिक्यम् | अहो विशालं भूपाल० |
| | | आधेयाधिक्यम् | युगान्तकालप्रति० |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| ४९. प्रत्यनीकम् | प्रतिपक्षमशक्तेन प्रतिकर्तुम्० | | त्वं विनिर्जितमनोभवरूपः |
| ५०. मीलितम् | समेन लक्ष्मणा वस्तु० | स्वाभाविकेन लक्ष्मणा | अपाङ्गतरले दृशौ० |
| | | आगन्तुकेन लक्ष्मणा | ये कन्दरासु निवसन्ति० |
| ५१. एकावली | स्थाप्यतेऽपोह्यते वापि | पूर्वं पूर्वं प्रति परस्य परस्य विशेषणतया स्था० | पुराणि यस्यां सवराङ्गनानि |
| | | पूर्वं पूर्वं प्रति परस्य परस्य विशेषणतया निषे० | न तज्जलं यन्न सुचारुपङ्कजम्० |
| ५२. स्मरणम् | यथानुभवमर्थस्य दृष्टे० | | निम्नाभिकुहरेषु यदम्भ |
| ५३. भ्रान्तिमान् | भ्रान्तिमानन्यसंवित्तत्तुल्य० | | कपाले मार्जारः पय इति० |
| ५४. प्रतीपम् | आक्षेप उपमानस्य प्रतीपमुपमेयता | उपमानस्याक्षेपः | लावण्यौकसि० |
| | | उपमानस्योपमेयता | अयि एहि तावत् सुन्दरि० |
| | | असाधारणगुणयोगाद् यस्योपमानत्वं पूर्वमनानुभूतम्० | अहमेव गुरुः सुदारुणानवम्० |
| ५५. सामान्यम् | प्रस्तुतस्य यदन्येन– | | मलयजरसविलिप्ततनवः |
| ५६ विशेषः | विना प्रसिद्धमाधारमाधेयस्य० | प्रसिद्धाधारं विना आधेयस्यावस्थाम् | दिवमप्युपयातानाम्० |

| अलङ्कारनाम | लक्षणानि | भेदाः | उदाहरणानि |
|---|---|---|---|
| | | एकस्य वस्तुन एक नानेकत्र वर्तनम् | सा वसति तव हृदये० |
| | | अन्यत् प्रकुर्वतः कार्यम-शक्यान्यवस्तुनः करणम् | गृहिणी सचिवः सखी० |
| ५७. तद्गुणः | स्वमुत्सृज्य गुणम्० | | विभिन्नवर्णा गरुडाग्रजेन० |
| ५८ अतद्गुणः | तद्रूपाननुहारश्चेद् | अप्रस्तुतेन प्रस्तुतरूपाननुहारः | धवलोऽसि यद्यपि सुन्दर० |
| | | प्रस्तुतेनाप्रस्तुतरूपाननुहारः | गांगमम्बु० |
| ५९. व्याघातः | यथा साधितम्० | | दृशा दग्धं मनसिजम्० |
| ६०- संसृष्टिः | सेष्टा संसृष्टिरेतेषां भेदेन | शब्दालङ्कारसंसृष्टिः<br>अर्थालङ्कारसंसृष्टिः<br>उभयालङ्कारसंसृष्टिः | वदनसौरभलोभ<br>लिम्पतीव तमोऽङ्गानि०<br>स नास्त्यत्रग्रामे० |
| ६१. सङ्करः (सन्देह-संकर) | अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वम् | १ अनुग्राह्यानुग्राहकरूपः | आत्ते सीमन्तरत्ने० |
| | एकस्य च ग्रहे न्यायदोष | २ सन्देहरूपः | यथा गंभीरो यथा रत्ननिर्भरो |
| (एकपदप्रतिपाद्यसंकरः) | भावाद् स्फुटमेकत्र विषये शब्दार्थालङ्कृतिः | ३ एकपदप्रतिपाद्यरूपः | स्पष्टोल्लसत्किरणकेसर |

प्रश्नः २— अलङ्कारदोषाणामुक्तेषु दोषेषु कथमन्तर्भावः ?

उ० २—अस्योत्तरं निम्नकोष्ठे द्रष्टव्यम् ।

| अलङ्कारदोष नाम | यस्मिन्नन्तर्भावः | उदाहरणानि | विवरणम् |
|---|---|---|---|
| अनुप्रासे प्रसिद्ध्यभावः | प्रसिद्धिविरुद्धता० | चक्री चक्रारपङ्क्ति० | अत्रत्या स्तुतिः पुराणेतिहासादौ न प्रसिद्धा० |
| अनु० वैफल्यम् | अपुष्टार्थत्वम् | भण तरुणि रमण० | वाच्यस्य विचिन्त्यमानं किञ्चिदपि चारुत्वं न । |
| | प्रतिकूलवर्णत्वम् | अनणुरणन्० | अत्र शृङ्गारे परुषा वर्णाः प्रतिकूलाः |
| अनु० वृत्तिविरोधः यमकस्यपादत्रये यमनम् | अप्रयुक्तत्वम् | भुजङ्गमस्येव मणिः० | |
| उपमायामुपमानस्य जातिप्रमाणन्यूनता | अनुचितार्थत्वम् | चाण्डालैरिव० (जातिगता) वह्निस्फुलिङ्ग इव० (प्र० गता) | चाण्डालादिभिरुपमानैःप्रस्तुतोऽर्थोऽत्यन्तं कदर्थितः । |
| उपमायामुपमानस्य जातिप्रमाणाधिकता | ,, क्रमेण | अयं पद्मासनासीनः० पातालमिव ते नाभिः० | |
| उपमानस्य धर्मन्यूनता | हीनपदत्वम् | स मुनिर्लाञ्छितो मौञ्ज्या० | उमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रति० |
| उपमानस्य धर्माधिकता | अधिकपदत्वम् | स पीतवासाः प्रगृहीतशार्ङ्गः० | उपमेयशङ्खादेरनिर्देशे शशिनो ग्रहणमधिकम् |
| उपमायामुपमनोपमेययोर्भिन्नलिङ्गत्वं भिन्नवचनत्वम् | भग्नप्रक्रमत्वम् | चिन्तारत्नमिव च्युतोऽसि | |

| अलङ्कारदोषनाम | यस्मिन्नन्तर्भावः | उदाहरणानि | विवरणम् |
|---|---|---|---|
| उपमायां कालभेदः | भग्नप्रक्रमत्वम् | अतिथिं नाम काकुत्स्थात् | अत्र चेतना प्रसादमाप्नोति न पुनरापेति |
| उप० पुरुषभेदः | ,, | प्रत्यग्रमज्जनविशेष० | अत्र लता विभ्राजते न तु विभ्राजसे |
| उप० विवक्ष्यादि भेदः | ,, | गङ्गेव प्रवहतु ते सदैव कीर्तिः | गङ्गा प्रवहति न तु प्रवहतु |
| उप० असादृश्यम् | अनुचितार्थत्वम् | प्रथ्नामि काव्यशशिनम् | काव्यरूपशशिनाऽर्थानां च रश्मिभिर्न सादृश्यम् |
| उप० असंभव | ,, | निपेतुरास्यादिव | ज्वलन्त्योऽम्बुधाराः |
| उत्प्रेक्षायां यथा-शक्यस्य संभावना वाचकता | अवाचकत्वम् | उद्ययौ दीधिकागर्भात् | सूर्यमण्डलान्निष्पतन्त्यो० |
| निर्विषय उत्प्रेक्षितार्थ- | अनुचितार्थत्वम् | दिवाकराद्रक्षति यो गुहासु | अचेतनतमसो दिवाकरात् त्रास एव न सम्भवति |
| समर्थकार्थान्तरन्यासः सामान्यविशेषणेन समासोक्तौ उपमानप्रतीतौ तदुपादानम् | अपुष्टार्थत्वम् पुनरुक्तं वा | स्पृशति तिग्मरुचौ ककुभः | कुतोऽद्रिणा तत् त्राणम्। |
| अप्रस्तुतप्रशंसायामुपमेयप्रतीतौ तत्कथनम् | अपुष्टार्थत्वम् | आहूतेषु विहङ्गमेषु मशकः | अचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभियुक्तौ पुनः कथनमयुक्तम्। |

इति दशमोल्लासः।

# अथ सङ्कीर्णाः केचित् प्रश्नाः

**प्र० १——'अत्र ऐरावणशक्रौ मदमानमुक्तौ जातौ' इत्यादि-सन्दर्भस्य क आशयः ।**

**उ० १——**'यस्प्रेक्ष्य चिररूढाऽपि' इत्यादिपद्ये मदेनैरावणमुखे मानेन च शक्रस्य हृदये निवासप्रीतिः उज्झिता त्यक्तेति वाच्यार्थोऽपि । व्यङ्ग्यार्थस्तु 'ऐरावणशक्रौ मदमानमुक्तौ जातौ' इत्यस्ति । अतो व्यङ्ग्यार्थस्य प्रकारान्तरेण कथनात् पर्यायोक्तालङ्कारः । अत्र हि यदेवोच्यते तदेव व्यङ्ग्यमस्ति, परन्तु यथा व्यङ्ग्यं न तथोच्यते । अर्थात् विषयेण वाच्यार्थव्यङ्ग्यार्थयोः कश्चनापि भेदो नास्ति । केवलं प्रकारेणैव भेदः । तत्र दृष्टान्तः—यथा गवि शुक्ले चलति दृष्टे 'गौः शुक्लश्चलति' इति विकल्पः । तदेव दृष्टं यदेव विकल्पयति न तु यथा दृष्टं तथा । अयं भावः–प्रत्यक्षं द्विविधमस्ति सविकल्पकं निर्विकल्पकञ्च—नामजात्यादिप्रकारयुक्तं ज्ञानं सविकल्पकं भवति । त्रिविधविषयताशून्यं तुरीय-विषयताशालि ज्ञानमर्थात् नामजात्यादिप्रकाररहितं ज्ञानं निर्विकल्पकं भवति । निर्विकल्पकसविकल्पकयोर्नास्ति, विषयस्य भेदः केवलं प्रकारस्यैव । यतो हि भिन्नत्वेनासंसृष्टत्वेन वा दृष्टं भिन्नत्वेन ( बौद्धमते ) संसृष्टत्वेन ( वैयाकरणादि-मते ) विशिष्टीक्रियते । अर्थात् निर्विकल्पके गोत्वप्रकारकं गोज्ञानं नास्ति, प्रत्युत गोज्ञानमात्रम् । सविकल्पके तु गोत्वप्रकारकं गोज्ञानमस्ति । इत्थञ्च दृष्टान्तदार्ष्टान्तिकयोर्विषयभेदो नास्ति अपि तु प्रकारस्यैव ।

**प्र० २——स्वाधीनपतिकेत्यादि-स्फुटीक्रियताम् ।**

**उ० २——**ननु 'गुणालङ्कारयुक्तमव्यङ्ग्यं 'चित्रम्' इति प्रथमोल्लासे गदितं विरुध्यतेऽलंकारस्थले व्यङ्ग्यस्यानुभवसिद्धतया तत्प्राधान्ये ध्वनित्वमप्राधान्ये गुणीभूतव्यङ्ग्यत्वरूपञ्चित्रस्य दुरुपपादत्वादिति चेन्न, स्वाधीनपतिकेत्यादौ व्यङ्ग्यसम्बन्धान्न चारुताप्रतीतिरपि तु इवादिवाच्योपमावैचित्र्यात् । न च 'ते चालंकारनिर्णये निर्णेष्यन्ते' यान्यलंकारोदाहरणतयोपन्यस्तानि तानि चित्र-काव्यस्योदाहरणानीति षष्ठ उक्तमत्र तु 'स्वप्नेऽपि' इत्यादीनि यानि उपमोदा-हरणतया कथितानि तानि चित्रकाव्यस्य नोदाहरणानि राजविषयकभादिरूपस्य व्यङ्ग्यस्य सत्त्वेनाव्यङ्ग्यत्वलक्षणचित्रकाव्यासम्भवादिति पूर्वापरविरुद्धाभिधान-

मिति वाच्यम्, रसभावादिरूपव्यङ्ग्यस्य सर्वत्राव्यभिचारित्वात्तत्रौदासीन्यमव-लम्ब्य काव्यालङ्काराणामुदाहरणात् । तद्रहितानां विरसतापादनाच्च । ननु 'स्वप्नेऽपि' इत्यादौ उपमालंकारोदाहृते पद्ये 'प्रभावप्रभव' इत्यनुप्रासोऽप्यस्ति तस्मात् संसृष्टिः संकरो वा वक्तुमुचितो न तूपमेति चेन्न, उपमानुप्रासयोः संसृष्टौ संकरे वोपमाया अपि सत्त्वात् ।

**प्र० ३—के रसवदाद्यलङ्काराः ।**

उ० ३—रसवदाद्यलंकाराः सप्त सन्ति । गुणीभूतो रसो रसवत्, गुणीभूतो भावः प्रेयः, गुणीभूतौ रसाभासभावाभासौ ऊर्जस्वि, गुणीभूता भावशान्तिः समाहितः, एवं गुणीभूता भावोदय-भावसन्धि-भावशबलताश्च तन्नामान एवा-लंकारा ज्ञेयाः ।

**प्र० ४—अथ केषाञ्चिदलङ्काराणां भेदाः ।**

उ० ४—१—उपमारूपकयोः, उपमायामिवादिप्रयोगात् सादृश्यं वाच्यं भवति, रूपके तु तदभावात् व्यङ्ग्यम् ।

२—तुल्ययोगितादीपकयोः, तुल्ययोगितायां प्रकृतानामप्रकृतानां वैधर्म्येण सम्बन्धः, दीपके तु प्रकृताप्रकृतयोरेकधर्मेण सम्बन्धः ।

३—लाटानुप्रासपुनरुक्तवदाभासयोः, लाटानुप्रासे समनाकारौ तात्पर्येण भिन्नौ शब्दौ भवतः पुनरुक्तवदाभासे भिन्नाकारौ ।

४—उत्प्रेक्षाभ्रान्तिमतोः, उत्प्रेक्षायां सम्भावनाकर्तुर्विषयस्य ज्ञानं भवति, भ्रान्तिमति विषयस्य ज्ञानं न भवति ।

५—सन्देहभ्रान्तिमतोः, सन्देहे उभयकोटिकं ज्ञानं भ्रान्तिमत्येककोटिकम् ।

६—सन्देहोत्प्रेक्षयोः, सन्देहे द्वयोरपि कोट्योः समत्वेन प्रतीतिरुत्प्रेक्षाया-मेककोटेः प्रधानत्वेन ।

७—उपमाऽनन्वययोः, उपमायां द्वयोः साम्योक्तिरनन्वये एकस्यैव ।

८—वक्रोक्तिद्वितीयापह्नुत्योः, वक्रोक्तौ परोक्तेरन्यथाकारः, द्वितीया-पह्नुतौ स्वोक्तेरेव ।

९—द्वितीयापह्नुतिव्याजोक्त्योः, द्वितीयापह्नुतौ गोपनकर्तो गोपनीयार्थः स्वयमुच्यते व्याजोक्तौ तु नोच्यते ।

१०—निदर्शनादृष्टान्तयोः, निदर्शनायां द्वयोर्वाक्यार्थयोः सापेक्षत्वम्, दृष्टान्ते तु निरपेक्षत्वम् ।

११—अप्रस्तुतप्रशंसासमासोक्त्योः अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वं समासोक्तौ त्वप्रस्तुतस्य ।

१२—अर्थापत्तिनिदर्शनयोः अर्थापत्तौ 'दण्डापूप'न्यायादर्थान्तरप्रतीतिमात्रम्, निदर्शनायां वाक्यार्थस्य सादृश्यं पर्यवसानम् ।

१३—अप्रस्तुतप्रशंसादृष्टान्तयोः, अप्रस्तुतप्रशंसायां क्वचिदप्रसिद्धस्यापि वस्तुनः प्रतिबिम्बत्वेनोपादानं दृष्टान्ते तु प्रसिद्धस्यैव ।

१४—उत्प्रेक्षानुमानयोः, उत्प्रेक्षायां विषयिणः (उपमानस्य) अनिश्चिततया प्रतीतिरनुमाने तु निश्चिततया ।

१५—अनुमानोत्तरयोः, एकपक्षगतत्वेन साध्यसाधनयोर्निर्देशोऽनुमाने भवति । उत्तरे तु न भवति ।

**प्र० ५—के व्यभिचारिणः ? व्यभिचारिस्थायिनोः को भेदः ।**

**उ० ५**—निर्वेदः, ग्लानिः, शंका, असूया, मदः, श्रमः, आलस्यम्, दैन्यम्, चिन्ता, मोहः, स्मृतिः, धृतिः, व्रीडा, चपलता, हर्षः, आवेगः जडता, गर्वः, विषादः, औत्सुक्यम्, निद्रा, अपस्मारः, सुप्तम्, प्रबोधः, अमर्षः, अवहित्थम्, उग्रता, मतिः, व्याधिः, उन्मादः, मरणम्, त्रासः, वितर्कः एते त्रयस्त्रिंशद् व्यभिचारिभावाः कथ्यन्ते । स्रजि सूत्रमिव स्थायिनो नियतावस्थानम् । व्यभिचारी तु फेनबुद्बुदवदनियतावस्थितिको भवति ।

**प्र० ६—सोदाहरणं लक्षणायाः षड् भेदा लेख्याः ।**

**उ० ६**—लक्षणा पूर्वं द्विविधा । शुद्धा गौणी च । शुद्धा चतुर्विधा गौणी च द्विविधा ।

१—सारोपा उपादानलक्षणा, यथा—कुन्ताः पुरुषाः प्रविशन्ति ।

२—साध्यवसाना उपा० ल०, यथा—कुन्ताः प्रविशन्ति ।

३—सारोपा लक्षणलक्षणा, यथा—आयुर्घृतम् ।

४—साध्यवसाना लक्षणलक्षणा, यथा—आयुरेवेदम् ।

५—सारोपा गौणी, यथा—गौर्वाहीकः ।

६—साध्यवसाना गौणी, यथा—गौरयम् ।

**प्र० ७—गौणीशुद्धयोर्भेदं प्रतिपाद्य लक्षणाषड्विधत्वं किमर्थमुक्तमिति प्रतिपादयत ।**

**उ० ७**—यत्र सादृश्यसम्बन्धो भवेत्तत्र गौणी, यत्र तु सादृश्यात् भिन्नः कश्चित् तादर्थ्यकार्यकारणभावावयवावयविभावादिः सम्बन्धो भवति तत्र शुद्धा ।

उपादानलक्षणा—अर्थान्तरसङ्क्रमितवाच्यध्वन्युपयोगिनी ।

लक्षणलक्षणा—अत्यन्ततिरस्कृतवाच्यध्वन्युपयोगिनी ।

गौणी साध्यवसाना—प्रथमातिशयोक्तिलक्षिका ।

शुद्धसाध्यवसाना—सहकारिनिरासेन कार्यकारित्वरूपसामर्थ्यातिशयरूपव्यङ्ग्योपदर्शिका ।

**प्र० ८—हेत्वलङ्कारः पृथगलङ्कारोऽस्ति न वा ?**

**उ० ८**—ननु 'हेतुमता सह हेतोरभेदेनाभिधानं हेतुः' इति प्राचीनैर्हेत्वलङ्कारः पृथग् लक्षितस्तस्मादत्रापि हेत्वलंकारो लक्षणीय इति चेन्न, आयुर्घृतमित्यादिरूपोऽयं नालंकारतामर्हति चमत्काराभावात् । न च 'अविरलकमलविकासः' इत्यत्र हेत्वलंकारप्रयुक्तं काव्यं प्राचीनैरुक्तं हेत्वलंकारानंगीकारे कथं नाम सङ्गच्छतामिति वाच्यम्, तत्र काव्यत्वं केवलानुप्रासमहिम्नैव काव्यलिङ्गमेव च हेत्वलंकारो न तु भिन्नः ।

**प्र० ९—व्यतिरेकालंकारभेदाः ।**

**उ० ९**—व्यतिरेकालंकारस्य चतुर्विंशतिर्भेदाः सन्ति । उपमेयगतोत्कर्षकारणमुपमानगतमपकर्षकारणं द्वयोरुक्तिः ।

( १ ) उपमेयगतोत्कर्षकारणाक्तिः ।

( २ ) उपमानगतापकर्षकारणानुक्तिः ।

( ३ ) उभयोरनुक्तिः ।

( ४ ) एतेऽश्लेषे उपमानोपमेयभावस्य शब्देन कथिते । चत्वारो भेदा आर्थे चत्वार एवं व्यञ्जिते, इत्थमश्लेषे द्वादशः श्लेषे च द्वादश । मिलित्वा चतुर्विंशतिः ।

**प्र० १०—'व्यज्यन्ते वस्तुमात्रेण' इति व्याख्यायताम् ।**

**उ० १०**—यत्र वस्तुमात्रेण वाच्यालंकाररहितेन अलंकृतयः अलङ्काराः व्यज्यन्ते तदा तासामलङ्कृतीनां ध्रुवं निश्चयेन ध्वन्यङ्गता ध्वनिव्यवहारप्रयो-

जकता । काव्यवृत्तेः काव्यव्यवहारस्य तदाश्रयात् अलंकारसापेक्षत्वात् । वस्तुमात्रेण यत्रालंकारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वमिति तत्त्वम् ।

**११ रूपकादिरलङ्कारः**——केचिदालंकारिका रूपकादीनामेवालंकारत्वं मन्यन्ते यतो हि विभावादिरूपार्थोपस्कारकतया मुख्यस्य रत्यादेरुत्कर्षको रूपकादिरेव वस्तुतोऽलंकारः । सुन्दरं सदपि वनिताननमलंकाररहितं न शोभते । केचित्तु अनुप्रासादीनामेवालंकारत्वं वाञ्छन्ति । यतो हि रूपकाद्यलंकारस्य काव्यप्रतीत्यनन्तरं प्रतीतिर्भवति । यत्र सुपां तिङां चानुप्रासादिरूपेणोत्पत्तिर्भवति तत्रैवालंकारता । शब्दालंकाराणां स्वतश्चमत्कारिताऽर्थालंकाराणान्तु विभवाद्युत्कर्षमुखेनैव । कविकर्म च शब्दविषयकमेव न त्वर्थविषयकं तेनानुप्रासादीनामेवालंकारता रूपकादिषु त्वलंकारव्यवहारो गौणः । श्रीमम्मटमते तु द्वयोरप्यलंकारता । यतो हि शब्दे स्वरूपेणालंकारता नास्ति निरर्थकेऽपि तदापत्तेः । नापि केवलेऽर्थेऽर्थबोधके च शब्देऽलंकारतेति द्वयोरपि शब्दार्थयोरास्वादोपकारकतयोभयत्राप्यलंकारता ।

**१२ गुणः कृतात्मसंस्कारः**——गुणोऽप्रधानं कृत आत्मनः स्वस्य संस्कारः अन्येन परिपुष्टिर्यस्य यादृशः प्रधानं प्राप्नोति । आत्मसंस्कारेण च प्रधानस्य महति उपकारे वर्तते । अयं भावः—गौणरसोऽन्येन परिपुष्टः सन् प्रधानं रसमुपकरोति । अनेन रसविरोधः परिहृतो भवति ।

**कर्णादिशब्दानां सार्थकानर्थकव्यवस्था**——यद्यपि अवतंसादीनि कर्णाभरणान्येव भवन्ति तथापि कर्णादिशब्दाः कर्णादिस्थितिज्ञानाय । यथा—'अस्याः कर्णावतंसेन' 'अपूर्वमधुरामोद' अनयोः पद्ययोः कर्णश्रवणशिरःशब्दाः सामीप्यज्ञानार्थाः । 'विदीर्णाभिमुखाराति' इत्यत्र रूढत्वज्ञानाय धनुःशब्दः तदविवक्षायां तु 'ज्याबन्धनिष्पन्दभुजेन' इत्यादौ केवलस्य ज्याशब्दस्य प्रयोगः । 'प्राणेश्वर' इत्यादौ अन्यरत्नाभिश्रितस्वबोधनाय मुक्ताशब्दः । 'सौन्दर्यसंपत्' इत्यादावुत्कृष्टपुष्पविषये पुष्पशब्दः । उपपदरहितं मालापदं पुष्पस्रजमेवाभिधत्ते । 'जगाद मधुरां वाचम्' इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थसिद्धिर्भवति । अतः 'गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित् प्रयोगः' इति न युक्तं, युक्तत्वे वा 'चरणत्रयपरित्राणे'त्याद्युदाहार्यम् । अर्थात् 'जगाद मधुरां वाचमि'—त्यत्र जगादेति क्रिययैव वाचो लाभे विशेषणदानार्थं वाचमित्यस्य ग्रहणमिति

केचित् तन्न, क्रियाविशेषणत्वेनैव निर्वाहे वाचमित्यस्य विशेषणदानार्थं ग्रहणं न युक्तम् ।

**१३ सर्वत्र एवंविधविषये**—ननु आधारं विना आधेयस्यावस्थानम्, एकस्यानेकत्रावस्थानम्, एकेन यत्नेन कार्यद्वयकरणं वस्तुतो नोपपन्नमिति चेन्न, एवंविधविषयेऽतिशयोक्तिरेव जीवनम् । अतिशयेन लोकसीमातिक्रमेण उक्तिः कथनम् । उक्तञ्च—'सैषा सर्वत्र वक्रोक्तिरि'त्यादि । अत्रापि वक्रोक्तिरतिशयोक्तिर्बोध्या । सर्वत्र एषा अतिशयोक्तिर्लोकसीमातिक्रमेणोक्तिरेवालंकारकारणमस्ति । एतदर्थं कविना यत्नः कार्यः । एनामन्तरेण प्रायेण कोऽप्यलंकारो नास्ति ।

**१४ एषा च विरोधबाधिनी**—असंगतिर्विरोधाभासबाधिकाऽस्ति । असंगतौ एकदेशकयोर्भिन्नदेशकत्वरूपानुपपत्तिरस्ति अतो विरोधाभासे भिन्नदेशकयोरेकदेशकत्वरूपानुपपत्तिः कथनं विनापि सिद्धयति । 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' इति न्यायात् । अपवादविषयं परित्यज्य सामान्यशास्त्रं प्रवर्तते । असङ्गतिरपवादोऽस्ति विरोधाभासः सामान्यमस्ति । तस्मादसङ्गतिविषयं परित्यज्य विरोधाभास प्रवर्तते ।

**१५ ननु समानमुच्चरितम्**—ननु कालभेदेऽप्युपमायां भग्नप्रक्रमता न भवितुमर्हति । उच्चारितं गम्यं वा कालाद्यनुपहितधर्मान्तिरमादाय कालभेदाभावात् । यत्रोच्चारितेनैव सामान्यधर्मेणोपमा प्रतीयते तत्रापि 'युधिष्ठिर इवायं सत्यं वदति' इत्यादौ युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति बोधयिष्यामः । 'सत्यवादी सत्यं वदति' इत्यादौ युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति बोधयिष्यामः । सत्यवादी सत्यं वदतीत्यत्र पुनरुक्तिस्तु न शंकनीया । युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमादिति चेन्न, साधुत्वार्थं नियमितेष्वेतत्समर्थनं न तु सर्वथा निर्दुष्टं, प्रकृतवस्तुप्रतीतिविनाशात् ।

**१६ सालङ्कारैर्ध्वनेस्तैश्च**—सालंकारैरित्यत्रैकशेषः । सालंकाराश्च सालंकाराश्च सालंकारास्तैः 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेषः । पूर्वमलंकारशब्दो भावघञन्तोऽलंकरणमलंकारः शोभा तया सह वर्तन्ते इति सालंकाराः । अपरत्रालंकारशब्दः करणघञन्तः । अलंक्रियतेऽनेनेत्यलंकार उपमादिस्तेन सहिताः सालंकाराः । ततश्चायमर्थः—अलंकारात्मतां प्राप्तैः समासोक्तिरसवदादिपदाभिधेयैः वाच्यालंकारयुक्तैश्च गुणीभूतव्यंग्यप्रभेदैः शुद्धैः सह एकपञ्चाशद्भेदस्य ध्वनेरेकरूपया संसृष्ट्या त्रिभिः संकरैश्च योगो भवतीति ।

**प्र० १७—आयःशूलिक इत्यत्र लुप्तोपमाऽस्ति न वा ?**

**उ० १७**—ननु अयःशूलमिव क्रूराचारस्तेनान्विच्छति व्यवहरतीति आयः-शूलिकः । अत्र हि क्रूराचार उपमेयः, तीक्ष्णत्वादिरूपः साधारणो धर्मः, साधारण-धर्मवाचक इवादिश्च नोपात्तः केवलमुपमानभूतमयःशूलमेवोपात्तम् । अतस्त्रि-लोपेयमुपमेति चेन्न, क्रूराचारस्य निगीर्णस्वरूपस्यायःशूलतादात्म्येनारोपादत्राति-शयोक्तिः । अन्यथा निगीर्याध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्तिः ।

**प्र० १८—'निरूढा लक्षणाः काश्चित्' इति व्याख्यायताम् ।**

**उ० १८**—अभिधानवत् शक्तिवत् सामर्थ्यात् प्रसिद्धेः शब्दस्वभावाद्वा निरूढाः अनादिप्रसिद्धाः काश्चिल्लक्षणा भवन्ति । यथा 'कर्मणि कुशलः' इत्यादौ । साम्प्रतम् अधुना काश्चित् प्रयोजनवशात् क्रियन्ते । यथा 'गङ्गायां घोषः' इत्यादौ । अत्र शैत्यपावनत्वादिप्रतीत्यर्थम् गङ्गादिपदस्य गङ्गातटादौ लक्षणा स्वीक्रियते । काश्चित् लक्षणा रूढिप्रयोजनान्यतराभावात् अशक्तितः प्रत्यायनसामर्थ्याभावात् नैव क्रियन्ते । यथा 'रूपो घटः' इत्यादौ । पददोषेषु नेयार्थदोष उक्तस्तत्र नेयत्वे प्रतिपादयितुं 'निरूढा लक्षणा' इत्याद्युक्तम् । निषिद्ध-लक्षणाया विषयो नेयः । नेयेऽर्थो यस्य तत् पदं नेयार्थम् ।

**१९ गुणानाञ्च परार्थत्वात्**—गुणानां विशेषणानां परार्थत्वात् प्रधाना-न्वयापेक्षित्वात् असम्बन्धः परस्परमनन्वयः स्यात् समत्वात् । गुणप्रधानभावेनैव पदार्थानामन्वयो न तु गुणानां गुणैः सह, नापि प्रधानानां प्रधानैः सहान्वय इति तत्त्वम् । इत्युक्तनयेन 'यासां त्रिदशेभ' इत्यादिपद्ये यच्छब्दनिर्देश्यानाम-र्थानां गुणत्वात् । परस्परमन्वयाभावेन यैरित्यत्र विशेष्यस्य प्रतीतिर्नास्ति । यैरिति यदर्थस्य विशेष्यतया क्षपाचारिसम्बन्धो विवक्षितः च न घटते क्षपा-चारिणामिति भिन्नविभक्त्यन्तक्षपाचारिशब्दस्य ग्रहणात् । तेनाभवन्मतयोगत्वं स्पष्टमेव । क्षपाचारिभिरिति पाठे त्वन्वयः सुसिद्धो भवति ।

इति पराशरवंशावतंसपण्डितश्रीमदमोलकरामात्मजपण्डितश्रीब्रह्मानन्दतनुजनुषा

सुरजीगर्भसमुद्भवश्रीपण्डितदेवदत्तशास्त्रिणा निर्मितं प्रथमोल्लासादारभ्य

दशमोल्लासपर्यन्तं काव्यप्रकाशरहस्यं समाप्तम् ।

—: * :—

# प्रश्नपत्राणि

## प्रथमं पत्रम् १९६६

१. निम्नलिखितेषु एकस्यांशस्य व्याख्या विधेया।

(क) बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यंग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः।

(ख) साधारणगुणाश्रयत्वेन प्रधानगुण एव लक्ष्यते इत्यपरे।

(ग) ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।

२. मम्मटोक्तदिशा काव्यप्रयोजनानि अभिधाय कस्याभ्यर्हितत्वं ग्रन्थकृताप्युपगतमिति साध्यताम्।

३. ध्वन्याख्यस्य काव्यस्य किं लक्षणं सोदाहरणं विशदीक्रियताम्।

४. संकेतितार्थविषये मम्मटस्य किम्मतम् पूर्वपक्षनिरसनपूर्वकं उपपाद्यताम्।

५. सर्वेषाम् प्रायशोऽर्थानाम् व्यञ्जकत्वमपीष्यते इति उदाहृयताम्।

६. वक्त्रादीनां केषाञ्चित् त्रयाणां वैशिष्ट्यात् प्रतिभाजुषाम् अन्यर्था धीः कथं भवति।

७. लक्षणास्वरूपं विशदयित्वा लक्षणाया यथा आरोपितशब्दव्यापारत्वं तथा प्रतिपाद्यताम्।

## द्वितीयं पत्रम्

१. व्यङ्ग्यार्थस्य वाच्यत्वसमर्थाः के, संक्षेपात् तन्मतं प्रदर्श्य यथासिद्धान्तं निरसनं विधीयताम्।

२. अभिनवगुप्तोक्तं रसलक्षणं विलिख्यताम्।

अथवा—रसः, कार्यः ज्ञाप्यो वा। तद्ग्राहकं ज्ञानम् किम् निर्विकल्पकमुत सविकल्पकमिति सर्वं विलिख्यताम्।

३. शब्दार्थचित्रलक्षणं सोदाहरणमुपपाद्यताम्। तथैवास्य काव्यस्य 'अधमत्वे' किं प्रयोजनं तदपि विविच्यताम्।

अथवा—ध्वनेः समग्रभेदान् लिखित्वा 'अचन्द्रचन्द्राभरणा समुद्दीपितमन्मथा । तारकातरलश्यामा सानन्दं न करोति किम् ॥' श्लोकेऽस्मिन् ध्वनिप्रकारं प्रदर्शयत ।

४. अत्रोच्यते—भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः । शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि । तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः ।

संदर्भभावपूर्वकं गद्यखण्डोऽयं व्याख्येयः ।

५. रसविषयक-भरतसूत्रस्य भट्टनायकमतानुसारं व्याख्यानं क्रियताम् ।

६. अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥

व्याख्यायतां कारिकेयमुदाहरणपूर्वकम् ।

## तृतीयं पत्रम्

अधोनिर्दिष्टेषु केऽपि पञ्च प्रश्नाः समाधेयाः ।

१. दोषसामान्यलक्षणघटितकारिकायां प्रकाशकृदभिमत ( शब्दाद्याः ) इत्यस्यार्थं सयुक्ति प्रदर्श्य श्रुति-प्रभृतिशब्दानां लक्षणपरत्वं लक्ष्यपरत्वं तदतिरिक्तत्वं वेति सप्रमाणमुपन्यसत ।

२. व्रीडादित्रितयानुगतमश्लीलत्वं व्युत्पाद्य 'आदावञ्जनपुञ्जलिप्तवपुषाम्' इति पद्ये निरर्थकत्वं संगमयत ।

३. अधिकपदत्व–अभवन्मतयोग–पर्यायप्रक्रमभंग-कष्टत्व–पुनरुक्तत्वदोषेषु त्रयाणामेव लक्षणानि लक्ष्येषु संयोज्य दूषकताबीजानि निर्दिशत ।

४. ग्राम्यत्वाश्लीलत्वयोः विरुद्धमतिकृत्त्वामतपरार्थयोः, अधिकपदत्वापुष्टार्थत्वयोः न्यूनपदत्वानभिहितवाच्यत्वयोश्चोदाहरणमुखेन भेदं निरूपयत ।

५. 'संग्रामांगणमागतेन भवता' इति पद्ये किं निबन्धनो दोषः कथं च तत्संगतिरिति पर्यालोचयत ।

६. स्मर्यमाणो विरुद्धोऽपि साम्येनाथविवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ।

कारिकामिमामुदाहरणमुखेन व्याख्यायताम् ।

७. पञ्चप्रकारायाः प्रौढेर्गुणत्वं निराकृत्य, 'वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् रचनावृत्ति वर्णनामन्यथात्वपीष्यते' इति कारिकायाः अन्वर्थतां प्रकटयत ।

८. गुणालङ्कारयोर्भेदः प्रदर्श्यताम् ।

## चतुर्थं पत्रम्

समानाङ्काः प्रश्नाः पञ्चैव केचन समाधेयाः ।

१. यमकस्य लक्षणं विलिख्य, मुख्यांश्च भेदान् नामग्राहतो निर्दिश्य अनुप्रासस्य किं भेदकमिति सोदाहरणं निपुणं निरूप्यताम् ।

२. पुनरुक्तवदाभासस्य शब्दालंकारता सुष्ठु विवेचनीया ।

३. उत्प्रेक्षालङ्कारस्य लक्षणं लक्ष्ये सङ्गमय्य, उपमातोऽस्यालङ्कारस्य वैशिष्ट्यं स्पष्टीकुरुत ।

४. निम्नाङ्किता कारिका, सोदाहरणं साधु व्याख्येया ।
'नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परम्परितं श्लिष्टे वाचके भेदमानि वा ॥

५. संकरात् संसृष्टेर्भेदः सोदाहरणं विवेचनीयः ।

६. निम्नाङ्कितेष्वलङ्कारप्रकारेषु केषाञ्चन त्रयाणां लक्षणोदाहृणे लिखत—उपमेयोपमा, निदर्शना, प्रतिवस्तूपमा, विरोधः, दृष्टान्तः, भाविकम्, पर्यायोक्तम्, अतिशयोक्तिः, विभावना, विशेषोक्तिः ।

७. निम्ननिर्दिष्टेषु श्लोकेषु कयोश्चन द्वयोरलङ्कारप्रकारनिर्णयः करणीयः ।

(क) योऽभकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदता बिभ्रद् विबुधेन्द्रः स राजते ॥

(ख) ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥

(ग) सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतिमार्जनं तु यः ।
स एव पूज्यः स पुमान् स नीतिमान् सुजीवितं तस्य समाजनप्रियः ।

(घ) निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शंखमपि पीतम् ॥

## प्रथमं पत्रम् १९६७

समानांकाः केचन पञ्च प्रश्नाः समाधेयाः ।

१—'नियतिकृतनियमरहितामिति' मङ्गलपद्यं व्याख्याय, कस्तावदत्र जयत्यर्थः, कया वृत्त्या तेन नमस्कार आक्षिप्यते ? किमत्र प्रधानं व्यङ्ग्यञ्चेति ।

२—'तददोषौ शब्दार्थौ' इत्यादिकाव्यलक्षणे यत्किञ्चिद्दोषाभावो यावद्दोषाभावो वा विवक्षित इत्युल्लिख्य 'यः कौमारहरः' इत्यादौ 'न कश्चिदलङ्कार' इत्युक्तेराशयं सम्यगुपपादयत । अथवा—काव्यप्रयोजनं वर्णयत ।

३—'न हि गौः स्वरूपेण गौर्नाऽप्यगौर्गोत्वाभिसम्बन्धात्तु गौः' पङ्क्तिमेतां प्रतिपदव्याख्यानमुखेन विशदयत ।

४—'मुखं विकसितस्मितम्' इत्याद्युदाहरणे तत्तल्लक्ष्य-व्यङ्ग्यमर्थजातं प्रपञ्चयत । अथवा—लक्षणां लक्षणादिभिर्विवेचयत ।

५—'तथाभूतां दृष्ट्वा' इत्युदाहरणे कथन्न काकोर्वाच्यसिद्ध्यङ्गत्वमित्युत्तरयत । अथवा—'संयोगो विप्रयोगश्चे'त्यादिकारिकार्थं निरूपयत ।

६—शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता ॥
कारिकामेतां सम्यग् विवृणुत ।

## द्वितीयं पत्रम्

१—अलक्ष्यक्रमव्यङ्ग्यस्य रसवदाद्यलङ्कारत्वं निरस्य लक्ष्यक्रमव्यंग्यञ्चोदाहृत्य
उपकृतं बहु तत्र किमुच्यते सुजनया प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम् ॥
किंमूलकस्य कस्य ध्वनेरुदाहरणमिदमिति सङ्घटयत ।

२—रसस्वरूपनिर्वचने शंकुकमतमुपक्षिप्य निरस्य च मम्मटाभिमतं तत् सयुक्तिकं विशद्यताम् ।

३—नामग्राहं व्यभिचारिभावं विगणय्य कयोश्चिद्द्वयोः सोदाहरणं लक्षणं ब्रूत ।

४—गुणीभूतव्यङ्ग्यस्य भेदान् प्रदर्श्य
अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।

ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥

काव्येष्वेतत् कथं कतमं काव्यमिति सहेतुकमुपन्यस्यताम् ।

५—शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।

इत्यादिकारिकया कस्य मतमुपक्षिप्तं ग्रन्थकृता ? ।

अथवा—कथञ्च तत् खण्डितमिति प्रदर्श्य द्वित्रैस्तर्कैः व्यञ्जनावृत्तिं साधयत ।

६—भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन ।

गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥

पद्यमिदं सप्रसङ्गं व्याख्याय व्यञ्जनायाः अनुमानानन्तर्भावं सम्पादयत ।

७—शब्दार्थयोः सम्पृक्ततया उभयोस्सर्वत्र सद्भावात् कथं शब्दचित्रार्थचित्रयोर्भेदः, किञ्च तयोरुदाहरणमिति व्यक्तमभिधीयताम् ।

## तृतीयं पत्रम्

सर्वे प्रश्नाः समानाङ्काः, केऽपि च समाधेयाः ।

१—मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः ।

उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥

कारिकाया अस्याः सङ्गतिनिर्देशपूर्वकं व्याख्यां विधाय दोषसामान्यलक्षणं परिष्क्रियताम् ।

२—शब्दार्थरसगतान् दोषान् विभागशः परिगणय्य शब्ददोषनिरूपणप्रसङ्गे प्रथमोपस्थितान् पदांशदोषानुप्रेक्ष्य पदवाक्यपदांशदोषनिरूपणात्मको मम्मटाचार्यस्य क्रमभङ्गः कथं समर्थनीय इति साधु समाधीयताम् ।

अथवा—अवाचकस्य लक्षणं सोदाहरणं निरूप्यताम् ।

३—शरत्कालसमुल्लासि पूर्णिमाशर्वरीप्रियम् ।

करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥

अत्र को दोषः कथं चेति विवेचनीयम् ।

४—'वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ' कारिकेयं यथा संभवोदाहरणैः व्याख्यायताम् ।

५—रसदोषाः के कानि च तेषां लक्षणानि साधु प्रदर्शनीयानि ।

६—गुणालङ्कारयोर्भेदविषयं वामनमतं समुपन्यस्य तत्खण्डनपुरःसरं प्रकाशकर्तृमतं परिष्क्रियताम् ।

७—केचिदन्तर्भवन्त्येषु दोषत्यागान् परे श्रिताः । अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ।। इति कारिकानुसारं शब्दगुणखण्डनं विधीयताम् ।

८—पञ्चविधानामोजोगुणानां सोदाहरणानि लक्षणानि प्रदर्श्य ग्रन्थदिशा तदन्तर्भावञ्च वर्णय ।

## चतुर्थं पत्रम्

समानाङ्काः प्रश्नाः केचन पंचैव समाधेयाः ।

१—अनुप्रासभेदान् नामतो निर्दिश्य द्वयोरुदाहरणं प्रदर्श्यताम् ?

२—यमकस्य लक्षणमनुप्रासाद् भेदं च प्रतिपाद्याद्यन्तान्तादियमकयोरुदाहरणं निगद्यताम् ।

३—अलङ्कारान्तरप्रतिभोत्पत्तिहेतुः श्लेषः श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरं वेति लिख ।

४—पुनरुक्तवदाभासं सोदाहरणं निरूपय ।

५—'पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव' अत्रोपमा श्लेषो वेति विचार्य शब्दसाम्यस्याप्युपमाप्रयोजकता युक्त्या प्रतिपाद्यताम् ।

६—'साधर्म्यमुपमा भेदे' अत्र साधर्म्यपदं सम्यग् व्याख्याय, 'मुखं चन्द्रः' 'चन्द्र इव मुखम्' इत्यनयोर्वाक्यार्थे कोऽपि भेदो न वेति ?

७—अनन्वयोपमेयोपमयोर्लक्षणं सोदाहरणं लिख्यताम् ।

८—प्रतीपव्यतिरेकयोरुदाहरणमुखेन भेदं प्रदर्श्यात्र चमत्कारबीजं प्रदर्शनीयम् ।

९—रूपकालङ्कारस्य लक्षणं प्रदर्श्य तस्य कियन्तो भेदाः इति वाच्यम् ।

१०—समासोक्तावप्रस्तुतव्यवहारसमारोपस्य हेतुता, उताहोऽप्रस्तुतसमारोपस्य हेतुतेति सम्यगुदाहरणमुखेन प्रदर्श्याप्रस्तुतप्रशंसातोऽस्य भेदः प्रदर्शनीयः ।

११—पर्यायोक्तस्य लक्षणं सपदकृत्यमभिधायात्रालङ्कारताबीजं प्रदर्शनीयम् ।

१२—संसृष्टिसंकरयोर्भेदं प्रदर्श्याङ्गाङ्गिभावसंकरस्योदाहरणं लेख्यम् ।

## १९६८

## प्रथमं पत्रम्

प्रथमः प्रश्नः नियतमेव समाधेयः । अन्ये च ये केचन चत्वारः समाधेयाः ।

१—अधोलिखितेषु कस्यचिदेकस्यैवांशस्य प्रसङ्गप्रदर्शनपुरस्सरं व्याख्या विधेया ।

(क) बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । (ख) अनयोर्लक्ष्यस्य न भेदरूपं ताटस्थ्यम् । (ग) ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।

२—ब्रह्मणो निर्मितेः कवेर्वाङ्निर्मितः कथं वैलक्षण्यं भजते इति प्रदर्श्यताम् ।

३—काव्यस्य प्रयोजनानि प्रदर्श्य, तत्र अस्ति कस्यापि प्रयोजनस्य अभ्यर्हितत्वम्—इत्यपि स्फुटीक्रियताम् ।

४—ध्वन्याख्यं काव्यं नाम किम् ? सोदाहरणं प्रतिपाद्यताम् ।

५—'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते' इति स्फुटमाविष्क्रियताम् ।

६—लक्षणाया स्वरूपं व्याख्याय, कथमियमारोपिताक्रिया-इत्यपि व्याख्यायताम् ।

७—लक्षणायाः षड्विधत्वं सोदाहरणं स्पष्टीक्रियताम् ।

८—वक्तृबोद्धव्ययोर्वैशिष्ट्यात् अन्यार्थप्रतीतिर्यथा भवति तथा विशदीक्रियताम् ।

## द्वितीयं पत्रम्

सर्वे प्रश्नाः समानाङ्काः, तत्र पंचैव समाधेयाः ।

१—अधोलिखितगद्यखण्डयोः कस्यचिदेकस्य स्पष्टीकरणं सरलसुरगिरा विधेयम् ।

(अ) यद्यपि सर्वत्र काव्येऽन्तो विभावादिरूपतया पर्यवसानं, तथापि स्फुटस्य रसस्यानुपलम्भाद् अभ्यङ्ग्यमेतत्काव्यद्वयम् ।

(ब) अखण्डबुद्धिभिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव च वाचकम् इति येऽप्याहुः, तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ।

अथवा—रसभावाभासत्वं कदा संभवतीति सोदाहरणं व्याख्यायताम् ।

२—लक्षणामूलकध्वनिकाव्यलक्षणं लक्षयित्वा तत्प्रकारनिरूपणं सोदाहरणं करणीयम् ।

३—रसविषयकं भरतसूत्रं विलिख्य पूर्वमतेऽसंमतिप्रदर्शनपूर्वकं श्रीशंकुकमतानुसारं तद् व्याख्येयम् ।

अथवा—कति सन्ति रसाः । भक्तिवात्सल्यशान्तानां रसत्वं भवति वा नेति स्पष्टं कृत्वा, कयोश्चिद् द्वयोः रसयोः सोदाहरणं निरूपणं कर्तव्यम् ।

४—गद्यखण्डस्य व्याख्यानं क्रियतां भावपूर्वकम् ।

'तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरेऽपि भवन्ति, अतश्चात्रैव स्नातकार्यत्वेनोक्तानीति नोपभोगे एव प्रतिबद्धानीत्यनैकान्तिकानि', अथवा—स्वतः संभविव्यञ्जकप्रकारवर्णनं सोदाहरणं कार्यम् ।

५—व्यङ्ग्यस्य अभिधावृत्तिगम्यत्वं कथं न संभवतीति यथाग्रन्थं लेखनीयम् ।

६—'भ्रम धार्मिक विश्रब्धं' इत्यत्रानुमानाकारः कीदृशः अत्र व्यञ्जना नानुमितिरिति युक्तियुक्तं प्रतिपाद्यताम् ।

## तृतीयं पत्रम्

पंचैव प्रश्नाः समाधेयाः ।

१—निर्दुष्टं दोषसामान्यलक्षणं प्रदर्श्यताम् ।

२—अत्र दृशामिति बहुवचनं निरर्थकं कुरङ्गेक्षणया एकस्या एवोपादानाद् । न चालसवलितैरित्यादिवद् व्यापारभेदाद् बहुत्वम् व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र दृक्शब्दो वर्तते । तत्रैव कुरुते इत्यात्मनेपदमप्यनर्थकं प्रधानक्रियाफलस्तत् कर्त्रसंबंधे कर्त्रभिप्राये क्रियाफलाभावात् । उदाहरणप्रदर्शनपुरःसरमयं ग्रन्थभागो व्याख्यायताम् ।

३—कथितपदत्वसमाप्तपुनरात्तत्वगर्भितत्वेषु कयोरपि द्वयोरुदाहरणे लिख्यताम् ।

४—अपुष्ट, निर्हेतु, प्रकाशितविरुद्धेषु अर्थदोषेषु कयोरपि द्वयोर्लक्षणमुदाहरणञ्च लिख्यताम् ।

५—सत्यं मनोरमा रामा सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गमङ्गलोलं हि जीवितम् ॥

पद्यमिदं कस्योदाहरणतयोपन्यस्तं मम्मटेनेति निर्णीयताम् ।

६—'आश्रयैक्ये विरुद्धो यः' इत्यादिकारिकायाः उदाहरणानि निरूप्यन्ताम् ।

७—गुणालङ्कारविभागविषये ग्रन्थकारमतं निर्दिश्यताम् ।

८—रचनादीनामन्यथाभावः कुत्र कुत्र सम्भवतीति विशदं विविच्यताम् ।

## चतुर्थं पत्रम्

सर्वे प्रश्नाः समानाङ्काः केचन पंचैव समाधेयाः ।

१—पुनरुक्तवदाभासस्य लक्षणोदाहरणे लिखत ।

२—अनुप्रासस्य लक्षणं सोदाहरणं निरूपयत ।

३—श्लेषः शब्दालङ्कारो न वा ? काव्यप्रकाशीयमत्र मतं किंविधम् ? स्पष्टं प्रतिपादयत ।

४—व्यतिरेकस्यातिशयोक्तेर्वा स्वरूपं निरूप्य प्रमुखांस्तत्प्रकारान् सोदाहरणं प्रदर्शयत ।

५—समासोक्तिं लक्षणोदाहरणपुरस्सरं विशदीकुरुत ।

६—निम्नाङ्कितेषु पद्येषु काव्यशोभाकरान् धर्मान् युक्तियुक्तं निर्दिशत—

(क) वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ।

(ख) अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥

(ग) उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥

(घ) गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वम्भराऽप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥

७—अधोनिर्दिष्टासु कारिकासु केचन द्वे साधु व्याख्येये—

(क) व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।

(ख) पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।

(ग) यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।

(घ) विपर्यास उपमेयोपमा तयोः ।

८—उपमोत्प्रेक्षयोः भेदनिरूपणं कुरुत ।

## १९६९

## प्रथमं पत्रम्

प्रथमः प्रश्नः नियतमेव समाधेयः । अन्ये च ये केचन चत्वारः स्वेच्छया समाधेयाः ।

१—अधोलिखितेषु कस्यचिदेकस्यैवांशस्य प्रसङ्गप्रदर्शनपुरस्सरं व्याख्या विधेया—

(क) अत्र स्फुटो न कश्चिदलङ्कारः रसस्य च प्राधान्यालङ्कारता ।

(ख) तद्वान् अपोहो वा शब्दार्थः कैश्चिदुक्तः ।

(ग) ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।

२—(क) मम्मटोक्तदिशा काव्यस्य कारणं विशदीक्रियताम् ।

(ख) काव्यस्य स्वरूपं काव्यप्रकाशमनुसृत्य स्फुटतया आविष्क्रियताम् ।

३—गुणीभूतव्यङ्ग्यं काव्यं नाम किम् ? सोदाहरणं प्रतिपाद्यताम् ।

४—कोऽसौ तात्पर्यार्थो नाम ? कस्येदञ्च मतम् इति निरूप्यताम् ।

५—(क) संकेतितस्य चतुर्भेदत्वं यथा भवति तथा व्याक्रियताम् ।

(ख) गौरनुबन्ध्यः इत्युपादानलक्षणायाः उदाहरणं भवितुमर्हति न वेति ?

६—'गौर्वाहीकः' इत्यादौ गवादिशब्दप्रवृत्तिनिमित्तविषये या विप्रतिपत्तयः ताः वैशद्येन व्याख्यायन्ताम् ।

७—काव्य-वाच्यवैशिष्ट्याद् अन्यार्थप्रतीतिर्यथा भवति तथा विशदीक्रियताम् ।

## द्वितीयं पत्रम्

१—विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतसूत्रघटकसंयोगनिष्पत्ति-पदार्थौ तत्तदाचार्यमते विशदीकृत्य रसस्य कार्यत्वं निरस्यत ।

२—व्यञ्जितव्यभिचारिभावाभासभावशबलत्वानां स्वरूपोदाहरणानि प्रदर्श्य प्राधान्येन व्यञ्जितव्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानाद् भावध्वनित्वं कथमिति पर्यालोचयत ।

३—तिग्मरुचिप्रतापो विधुरनिशाकृद् विनोदमधुरशीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदति पुनः स भात्युदाराऽनुदारश्च ॥

सखी विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् ॥

पद्यानीमानि केषां ध्वनीनामुदाहरणत्वेनोपन्यस्तानि इति स्पष्टं व्यावृणुत ।

४—पुरुषव्यत्ययस्य, प्रत्ययनिपातस्य च व्यञ्जकत्वमुदाहरणमुखेन स्फुटयत ।

५—भट्टमतोपजीविनामिष्टं 'निश्शेष' इत्यादौ विधेर्वाच्यत्वं निराकृत्य तस्य व्यङ्ग्यत्वं युक्त्या प्रतिपादयत ।

६—व्यङ्ग्यस्य लक्ष्यत्वमनुमेयत्वं च सोपष्टम्भं सयुक्तिकं निराकुरुत ।

७—शब्दचित्रार्थचित्ररूपभेदद्वयस्य प्रथमोल्लासे दर्शितत्वात् तद्भेदानाञ्चाग्रे दर्शयिष्यमाणत्वात् पुनरन्तराभेदप्रतिपादनस्यापतितं नैर्थक्यं समाधत्त ।

## तृतीयं पत्रम्

समानाङ्काः केऽपि पञ्च प्रश्नाः समाधेयाः ।

१—क्रमप्राप्तं दोषाभावनिरूपणमुपेक्ष्य दोषविवेचनं कथङ्कारं कृतं कथं-कारेणेति विविधसोदाहरणं पदगताश्लीललक्षणमुल्लिख्यताम् ।

२—नेयार्थत्वाप्रयुक्तत्वयोः अधिकपदत्वापुष्टार्थत्वयोः भेदः स्फुटं निर्दिश्यताम् ।

३—कुत्र तच्छब्दो यच्छब्दोपादानं नापेक्षते इति विशदं विविच्यताम् ।

४—'अत्र गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इत्युक्तनयेन यच्छब्द-निर्देश्यानामर्थानां परस्परमसमन्वयेव यैरित्यत्र विशेष्याप्रतीतिरिति ।

अयं ग्रन्थभागः सप्रकरणं व्याख्यायताम् ।

५—अनवीकृतत्व—सहचरभिन्नत्वयोरुदाहरणे प्रदर्श्य कथितपदं कुत्र गुणतां गच्छतीति सोदाहरणमुपपाद्यताम् ।

६—ब्रह्मानन्दस्वरूपस्य रसस्य रसान्तरेण विरोधः कथं सम्भवतीति विचार्य गुणानां रसधर्मत्वं साधु निश्चीयताम् ।

७—पञ्चविधायाः प्रौढेः सोदाहरणं स्वरूपं निरूप्यताम् ।

## चतुर्थं पत्रम्

सर्वे प्रश्नाः समानांकाः, केचन पंचैव समाधेयाः ।

१—यमकलाटानुप्रासौ सोदाहरणं सपदकृत्यञ्च लक्षयित्वा तयोः परस्परं पार्थ-क्यञ्च प्रदर्श्य तदेतत्काव्यान्तर्गतभूतमिति मम्मटमतं साधु व्याख्यायताम् ।

२—लुप्तोपमालंकृतभेदाः सोदाहरणं दर्शनीयाः ।

३—निदर्शनादृष्टान्तयोः दीपकप्रतिवस्तूपमयोश्च मिथो भेदः निरूपणीयः ।

४—निम्नलिखितेषु कस्मिन्नपि पद्यत्रयेऽलङ्काराः सयुक्तिनिर्देश्याः—

(क) दिनमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥

(ख) गाङ्गमम्बुसितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ॥

(ग) दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥

(घ) यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥

(च) लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥

५—अप्रस्तुतप्रशंसालङ्कारस्य विषमालङ्कारस्य वा प्रकाराः सलक्षणोदाहरणं लेख्याः ।

६—'स्फुटमर्थालङ्कार' इति कारिकां व्याख्यायोपमालङ्कारस्य श्लेषप्रतिभोत्पत्तिहेतुः संदर्शनीयम् ।

७—अधोनिर्दिष्टासु कारिकासु केचन द्वे सम्यग् व्याख्येये ।

(क) तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ।

(ख) व्याजोक्तिछद्मनोद्भिन्नवस्तुरूपाणि गूहनम् ।

(ग) तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ।

८—अनुप्रासोपमोत्प्रेक्षालङ्कारेषु कस्यैकस्यालङ्कारस्य वामनोक्ता दोषा मम्मटमतेन कथं कुत्र चान्तर्भवति इति प्रदर्श्यताम् ।

## प्रथमं पत्रम् १९७१

१—काव्य उत्तमत्वप्रयोजकं किमित्युपपाद्य ध्वनेरर्थनिष्ठत्वे सति शब्दे व्यवहारः कथमित्युपपाद्यताम् ।

यदि वा—वाच्यलक्ष्यव्यङ्ग्यार्थानां व्यञ्जकत्वं सोदाहरणं प्रतिपादनीयम् ।

२—अनेकार्थकानां शब्दानां संयोगविप्रयोगादिभिरर्थे नियन्त्रिते अर्थान्तरप्रतीतिः कया वृत्त्या संभवतीति सोदाहरणं विशदयत ।

यदि वा—काकुचेष्टोः अभिप्रायविशेषव्यञ्जकत्वं सोदाहरणमभिधीयताम् ।

३—अधोनिर्दिष्टयोः कामप्येकां कारिकां विवृणुत—

'शक्तिर्निपुणता लोक-शास्त्र-काव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥'

'लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥'

४—अभिहितान्वयवादिनां भाट्टानां मते स्वमर्थमभिधाय निवृत्तेषु पदेषु वाक्यार्थः कथं संभवतीति निरूपयत । अथवा—अधोनिर्दिष्टं श्लोकं विवृणुत—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ।

५—'गौर्वाहीक' इत्यत्र कस्य लक्षणा कुत्र संभवतीति यथाग्रन्थं प्रतिपादयन्तु ।

यदि वा—'संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा' इति वितत्य विशदयन्तु ।

## द्वितीयं पत्रम्

सर्वे प्रश्नाः समानांकभाजाः स्वेच्छया पंचैव समाधेयाः ।

१—रसवदादीनामलङ्कारतां कथं संभवतीति यथाग्रन्थं प्रतिपाद्यताम् ।

२—'लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञान-वेद्यान्तरसंस्पर्श-रहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदन-गोचरः'—ग्रन्थांशस्यास्य सप्रसङ्गा व्याख्या विधेया ।

३—अभिनवगुप्तपादाचार्यसम्मतस्य रससिद्धान्तस्य स्वरूपं निरूपणीयम् ।

४—'शान्तोऽपि नवमो रसः' इति कारिकांशं स्फुटीकृत्य, भावः कः ? तस्य ध्वनित्वं कथमिति क्वचिदुदाहरणे प्रतिपादनीयम् ।

५—संदिग्धप्राधान्यतुल्यप्राधान्ययोः अपराङ्गव्यंग्यवाच्यसिद्ध्यङ्गव्यंग्ययोः पारस्परिकं प्रभेदं प्रदर्शयत ।

६—'रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः'। 'उभयनयेऽप्यपदार्थ एव वाक्यार्थः'। खण्डद्वयस्य विशदा व्याख्या विधेया।

७—'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः'। 'यत्परः शब्दः स शब्दार्थः'। इति मतद्वये एकस्यैव पूर्वपक्षं प्रतिपाद्य सोपपत्तिकं सिद्धान्तपक्षः संसाधनीयः।

८—'व्यङ्ग्यस्य लक्षणागम्यत्वं सुसाध्यम्'—मतस्यास्य समालोचनं कार्यम्।

## तृतीयं पत्रम्

सर्वे प्रश्नाः समानांकाः केचन पंचैव समाधेयाः।

१—'दीनं त्वामनुनाथते' इत्यत्र 'आशिषि नाथ' इति वार्त्तिकेन आशीरर्थे नाथतेरात्मनेपदमेवेति नियमश्चेत् क्रियते तदा याचनेऽनियमेन आत्मनेपदं सिध्यतीति कुतोऽत्र च्युतसंस्कृतिर्नामदोष इति समाधीयताम्।

२—'येषां तास्त्रिदशेभदानसरितः सीताः प्रतापोष्मभिरि'ति पद्ये यैरिति यदर्थस्य विशेष्यतया विवक्षितः क्षपाचारिसम्बन्धी न घटते निर्विभक्तिकत्वात् किन्तु क्षपाचारिभिरिति तृतीयान्ते सति युज्यते समन्वय इत्युक्तम् परमत्र यैरित्यस्य सम्बन्धे सत्यपि येषामिति यदर्थस्य क्षपाचारिभिरिति तृतीयान्ते कथं घटेतेति समाधीयताम्।

३—अष्टाङ्गयोगपरिशीलनकीलनेन दुस्साधसिद्धिसविधं विदधद्विदूरे।
आसादयन्नभिमतामधुना विवेकख्यातिं समाधिधनमौलिमणिर्वियुक्तः॥
इति पद्यं सम्यग् व्याख्याय शास्त्रविरुद्धोऽत्र कोऽस्ति दोष इति निर्दिश्यताम्।

४—सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्॥
इति पद्ये विरुद्धयोः शान्तशृङ्गारविभावयोरुक्तिर्गुणमावहति न तु दोषमिति मतं मतान्तरनिरासपूर्वकं व्यवस्थाप्यताम्।

५—उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः॥
इति अलङ्कारलक्षणं व्याख्याय लक्ष्ये समन्वयोऽपि विधीयताम्।

६—माधुर्योजःप्रसादाख्यान् गुणान् लक्षयित्वा तेषां शृङ्गारकरुणशान्तादिषूत्तरोत्तरमतिशयिताञ्च प्रदर्श्य एषां रसभावधर्मत्वे प्रमाणमपि निर्दिशत ।

## चतुर्थं पत्रम्

सर्वे प्रश्नाः समानांकाः केचन पंचैव समाधेयाः ।

१—श्लेषस्योपमाद्यलङ्कारप्रतिभोत्पत्तिहेतुत्वं सम्यङ्निराकरणीयम् ।

२—यमकलाटानुप्रासयोः दीपकतुल्ययोगितयोश्च मिथो भेदः सोदाहरणं निरूपणीयः ।

३—'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति यद् विशेष्यस्य साभिप्रायत्वे मम्मटेन परिकराङ्कुरालङ्कारः कथं न स्वीक्रियते ? 'विशेषणै'रित्यत्र बहुवचनप्रयोगेण च किं ध्वन्यते ?

४—अधोनिर्दिष्टेषु किमपि सन्दर्भद्वयं साधु व्याख्येयम्—

(क) आयःशूलिक इत्यतिशयोक्तिर्न तु······त्रिलोपेयमुपमा ।

(ख) 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादेः 'कृपाणपाणिश्च भवान् रणक्षितौ स साधुवादाश्च सुराः सुरालये' इत्यादेश्च दर्शनात् 'व्यधिकरणे' इति 'एकस्मिन् देशे' इति च न वाच्यम् ।

(ग) पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम् ।
धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यत्वम् ।

(घ) यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापाद्यते, न तत्रैतद्दूषणावतारः ।

५—निम्नलिखितेषु कस्मिन्नपि पद्यत्रयेऽलङ्काराः सयुक्तिनिर्देश्याः—

(अ) लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥

(ब) दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥

(स) दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥

६—प्राचीनैरभिहिता उपमादोषा मम्मटेन कया रीत्या काव्यदोषेष्वन्तर्भाविताः, सोदाहरणमुच्यताम् ।

७—परिसंख्यालङ्कारस्य परम्परितरूपकालङ्कारस्य वा सकलाः प्रकाराः सलक्षणोदाहरणं लेख्याः ।

८—पाणिनीयसम्प्रदाय-व्याकरणशास्त्रज्ञानं विना काव्यप्रकाशस्य रहस्यं बहुत्र स्पष्टं न भवतीति मतं सप्रमाणं खण्डनीयं मण्डनीयं वा ।